## PREFACE.

This Edition of the Paramártha-Sára is based on the following Manuscripts:—

क—an old manuscript from which a first copy was made;

ख—belonging to Pt. Hara Bhatta Shástri.

ग—in Devanágari obtained through Pt. Hara Bhatta Shástri.

घ—much older than all the above, belonging to Pt. Maheshvar Rájának of Department.

For an account of the work see my *Kashmir Shaivaism* p. 10, footnote 3.

J. C. Chatterji.



THE

# PARAMĀRTHA-SĀRA

BY

ABHINAVA GUPTA

with the commentary

OF

YOGARĀJA

---

अथ

# परमार्थसारः

योगराजाचार्यकृतविवृति-सहितः




श्रीनगर

( कश्मीर )

संवत् १९७३



SRINAGAR

Printed by P. Vishi Nath and Sons, Photographers and Proprietors of "Kashmir Pratap Steam Press" and Published by the Research Department, Srinagar, Kashmir.

THE

# KASHMIR SERIES OF TEXTS AND STUDIES

Published under the authority of the Government of His Highness Lieut. General Sir Pratap Singh, G.C.S.I., G.C.I.E., Maharaja Sahib Bahadur of Jammu & Kashmir State.

EDITED BY

JAGADISHA CHANDRA CHATTERJI, B. A. (Cantab),
VIDYAVARIDHI

WITH

The co-operation of the Pandits
OF
The Research Department
OF
THE KASHMIR STATE

Vol. VII

काश्मीरग्रन्थावली

श्रीमत्-कश्मीरमहाराजादेशेन

सम्पादिता ।

सप्तमखण्डम्




SRINAGAR,
KASHMIR.
1916

Price Rs. 2/-



SRINAGAR

Printed by P. Vishi Nath and Sons, Photographers and Proprietors of "Kashmir Pratap Steam Press" and Published by the Research Department, Srinagar, Kashmir.

श्रों नमश्चिदात्मपरमार्थवपुषे ॥

अथ

# परमार्थसारः

श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्ताचार्यविरचितः ।

---

श्रीमद्योगराजाचार्यकृतविवृत्युपेतः ।

---

चिद्घनोऽपि जगन्मूर्त्या श्यानो यः स जयत्यजः ।
स्वात्मप्रच्छादनक्रीडाविदग्धः परमेश्वरः ॥ १ ॥

योऽयं व्यधायि गुरुणा
युक्त्या परमार्थसारसंक्षेपः ।
विवृतिं करोमि लघ्वीम्
अस्मिन् विद्वज्जनार्थितो योगः[1] ॥२॥

इह शिवाद्वयशासने देहादिप्रमातृताप्राधा-

(१) योगः योगराजाभिध आचार्यः ।

पं० २ घ० पु० प्रच्छादने क्रीडाविदग्धेति पाठः ।
पं० ७ ख० ग० घ० पु० प्राधान्यसंकल्पेति 'स्व' पदहीनः पाठः ।



न्यस्वसंकल्पसमुत्थशङ्कातङ्कालस्यसंशयादिरूप-विघ्नौघप्रसरप्रध्वंसपूर्विकां शास्त्रनिष्पत्तिं मन्यमानः, परिमितप्रमातृताधस्पदीकारेण चिदानन्दैकघन-स्वात्मदेवतासमावेशशालिनीं समस्त-शास्त्रार्थसंक्षेपगर्भां प्रथमतः तावत् परमेश्वरप्रवणतां परामृशति

परं परस्थं गहनाद् अनादिम्
एकं निविष्टं बहुधा गुहासु।
सर्वालयं सर्वचराचरस्थं
त्वामेव शंभुं शरणं प्रपद्ये ॥१॥

'त्वां' सर्वप्रमातृस्फुरत्तासारं स्वात्मदेवतारूपमेव 'शंभुं' अनुत्तरश्रेयःस्वभावं सत्तात्मकं, 'शरणं' त्रातारं त्वत्समावेशसमापत्तये संश्रये। एव-कारः, शम्भुं स्वात्मदेवताकारमेव प्रपद्ये, न पुनः मायान्तश्चारिणं कंचित् भिन्नं देवम् – इति अन्ययोगं व्यवच्छिनत्ति। अन्यच्च किंभूतं 'परं' पूर्णं चिदान-

पं० १३ ग० घ० पु० शरणं आगमि इति पाठः।



न्देच्छा-ज्ञान-क्रियाशक्तिनिर्भरम् अनुत्तरस्वरूपम्, तथा 'परस्थं गहनात्' इति, गहनात् मायाभिधानात् तत्त्वात् परस्मिन् पूर्णे एव शिवादिविद्यातत्त्वपर्यन्ते शुद्धाध्वनि स्वरूपे तिष्ठन्तं, न पुनः तत्तदवस्थावैचित्र्येणापि स्फुरतः, ततः परस्मात् पूर्णात् स्वरूपात् तस्य प्रच्यावो भवति। यदुक्तम्

'जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति।
निवर्तते निजान्नैव स्वरूपादुपलब्धृतः ॥' (स्प० १।३)

इति स्पन्दशास्त्रे। 'अनादिं' पुराणं -सर्वप्रतीतीनाम् अनुभवितृतया प्रमातृत्वेन आदिसिद्धत्वात्, 'एकम्' इति असाहायं, चिदैक्येन स्फुरणात् भेदस्य अनुपपत्तेः। तथा 'निविष्टम्' इत्यादि। एवं-जातीयकमपि स्वस्वातन्त्र्येण 'बहुधा' नानाप्रकारैः भेदैः 'गुहासु' रुद्र-क्षेत्र(२)ज्ञरूपासु हृद्गुहासु अन्तराविष्टं, चैतन्यरूपोऽपि स्वयं जडाजडात्मतामाभास्य नटवत् नाना-

(२) रुद्रा भुवनपतयः, क्षेत्रज्ञाः पशुप्रमातार इति।

पं० ६ ख० ग० पु० भवति इति पदं नास्ति।
पं० १६ ख० घ० पु० हृत्खदासु इति पाठः।

प्रमातृतया स्थितः—इति यावत्। अत एव 'सर्वालयम्' इति, 'सर्वस्य' रुद्र-क्षेत्रज्ञादिप्रमातृ-प्रमेयरूपस्य जगतः 'आलयं' विश्रान्तिस्थानं। सर्वमिदं किल पूर्णप्रमातरि स्थितं सत्, ग्राह्यग्राहकयुगलकापेक्षया उन्मग्नमिव भेदेन प्रकाशमानं नानारूपैः व्यपदिश्यते, अन्यथा एतस्य प्रकाशात् भिन्नस्य सत्तैव न स्यात्, कुतः इदं विश्वम्—इति सर्वनामप्रत्यवमर्शः। न एतावता भगवतः समुत्तीर्णं स्वरूपम्— इत्याह 'सर्वचराचरस्थम्' इति। सर्वमिदं यत् जडाजडस्वभावं विश्वं, तद्रूपतया तिष्ठन्तं,

'कर्तासि सर्वस्य यतः स्वयं वै
विभो ततः सर्वमिदं त्वमेव।'

इति न्यायेन हि व्यतिरिक्तस्य अन्यस्य अप्रकाशमानस्य कार्यत्वानुपपत्तेः।

'भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः।'

(स्प० ३।२)

पं० ६ क० ग० पु० नामरूपैरिति पाठः। क० घ० पु० एतत्प्रकाशात् इति पाठः।

पं० १० ख० घ० पु० इदं जडाजडेति पाठः।



इति भगवानेव तथा तथा चकास्ति—इति। एवंविधं त्वाम् अनुत्तरं सर्वस्य स्वात्मदेवतास्वरूपं पराहन्ताचमत्कारसारमपि गृहीतनानात्वम्, अथ च अत्यन्ताखण्डितस्वस्वातन्त्र्य-परमाद्वयप्रकाशस्वभावं भगवन्तं शंभुं 'प्रपद्ये' शरीरादिकृत्रिमाहंकारगुणीकारेण एतादृशं त्वामेव स्वात्मानं पराहन्ताचमत्कारस्वरूपं समाविशामि—इति यावत्। अनेन ग्रहणकवाक्येन परमोपादेयां स्वस्वभावसमावेशमयीं दशाम् उपदिशता गुरुणा वक्ष्यमाणहेयोपादेयतया सकलग्रन्थार्थोपक्षेपः कृतः ॥ १ ॥

एवं प्रकरणतात्पर्यम्-अद्वयस्वरूपं स्तुतिद्वारेण प्रतिपाद्य, इदानीं शास्त्रावतारम् अभिदधत् संबन्धाभिधेयादिकं ग्रन्थकृत् आर्याद्वयेन आह

पं० १२ ग० घ० पु० एवं प्रकारेण तात्पर्यम् अद्वयरूपम् इति पाठः।

गर्भाधिवासपूर्वक-
मरणान्तकदुःखचक्रविभ्रान्तः ।
आधारं भगवन्तं
शिष्यः पप्रच्छ परमार्थम् ॥ २ ॥
आधारकारिकाभिः
तं गुरुरभिभाषते स तत्सारम् ।
कथयत्यभिनवगुप्तः
शिवशासनदृष्टियोगेन ॥ ३ ॥ (युगलकम्)

कश्चित् भगवत्प्रसादात् समुत्पन्नवैराग्यः संसारात् विरतमतिः, गुरोः शासनीयोऽस्मि— इति मत्वा, सद्गुरुम् 'आधारं भगवन्तं' शेषाख्यं मुनिं सम्यक् आराध्य परमार्थोपदेशस्वरूपं पृष्टवान् । तदा तद्योग्यतापरिपाकस्वरूपपरिशीलनक्रमेण 'तं' शिष्यं विगलितान्तःकरणं मत्वा, सोऽपि अनन्तनाथो निःशेषशास्त्रोपदेशज्ञः परमार्थसारनाम्ना 'आधारकारिकाभिः' इ-

पं० १६ ख० ग० घ० पु० परमार्थनाम्ना इति पाठः ।



त्यपराभिधानग्रन्थेन सांख्यनयोक्तोपदेशानुसारेण प्रकृतिपुरुषविवेकज्ञानात् परब्रह्मावाप्तिः— इत्येवम् एतं शिष्यं प्रोक्तवान् । स एव ब्रह्मोपदेशः परमाद्वयस्वरूपस्वस्वातन्त्र्यदृष्ट्या प्रतिपादितः सन् युक्तियुक्तो भवति—इति मत्वा सर्वं जनम् अनुग्रहीतुं परमाद्वयशैवनययुक्त्या, 'गुरुः अभिनवेन' अलौकिकेन चिच्चमत्कारस्फारेण 'गुप्तो' गुह्यः सरहस्यः—इति। सोऽयं पुण्यनामाक्षरावलिः, 'तत्सारं' तस्य परमार्थोपदेशस्य यत् सारं, दध्नो नवनीतमिव उपादेयं, परानुग्रहप्रवृत्तः सन् प्रतिपादयति—इति । एवं संबन्धाभिधेयाभिधानप्रयोजनादय उपपादिताः, न इह पुनः शास्त्रगौरवभयात् प्रतन्यन्ते । कीदृशः स शिष्यः ! – इत्याह 'गर्भाधिवास' इति । गर्भाधिवासप्रारम्भं जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति – इति तत्तद-

पं० ३ ग० घ० पु० असावेव इति पाठः ।

पं ४ ग० घ० पु० परमाद्वयरूपेति 'स्व' शब्दहीनः पाठः ।

वस्थावैचित्र्येण षड्भावविकार[३]नेमियुक्तं यत् 'मरणान्तकदुःखरूपम्' आविर्भावतिरोभावात् संसरणस्वभावतया चक्रमिव 'चक्रम्' तस्मिन् 'विश्रान्तो' विपरिवृत्तः। अनेन अस्य प्राग्जातिस्मरणस्वभावो बोधाविर्भावो द्योतितः, अन्यथा कथं काष्ठाप्राप्तिलक्षणं प्रश्नकुतूहलित्वं स्यात्। एवं च यः समुत्पन्नवैराग्यः परमेश्वरानुग्रहशक्तिविद्धहृदयः समुदितसम्यग्ज्ञानः उपदेशपात्रताम् अवाप्य, परमेश्वराकारं समुचितमपि गुरुं समासाद्य, परमाद्वयज्ञानम् अभिलषते, स एव च गुरूपदेशभाजनं स्यात्- इति। एतदेव च अन्यत्र उक्तम्

'शक्तिपातवशाद्देवि नीयते सद्गुरुं प्रति।'

इति।

'दीयते परमं ज्ञानं क्षीयते कर्मवासना।'

इति च। इह च पुरस्तात् वक्ष्यते॥ ३॥

(३) विकार एव नेमिः चक्रधारा इति।

पं० २ ख० पु० जन्ममरणान्तं दुःखेति, घ० पु० तन्मरणान्तं दुःखेति पाठः।
पं० १५ ख० पु० दीयते इति पद्यार्धं नास्ति।



अधुना समुत्पत्तिक्रमेण पीठिकाबन्धं विधाय, विश्ववैचित्र्याचित्रे अस्मिन् जगति पारमेश्वरम् अनुत्तमं स्वातन्त्र्यम् एकमेव संयोजनवियोजनकर्तृत्वहेतुः—इति तच्छक्तिविकासमेव विश्वम् अण्डचतुष्टयमुखेन आवेदयन् ग्रन्थम् अवतारयति

निजशक्तिवैभवभराद्
अण्डचतुष्टयमिदं विभागेन।
शक्तिर्माया प्रकृतिः
पृथ्वी चेति प्रभावितं प्रभुणा ॥४॥

चिदानन्दैकघनेन 'प्रभुणा'-स्वतन्त्रेण भगवता महेश्वरेण अण्डचतुष्टयं विश्वाच्छादकत्वेन कोशरूपतया वस्तुपिण्डभूतम् 'इदम्'; यदुक्तम्

'………… वस्तुपिण्डोऽण्डमुच्यते।'

इति। 'प्रभावितं'-प्रकाशितं, भवनकर्तृतया वा प्रयुक्तम्। कस्मात् – इत्याह 'निजशक्तिवैभव-

पं० १० ख० घ० पु० विभावितम् इति पाठः।
पं० १५ ख० घ० पु० विभावितम् इति पाठः।

भरात्' इति। 'निजः'-स्वात्मीयो योऽसौ-असाधारण इच्छाद्यः 'शक्तिप्रचयः' तस्य यत् 'वैभवं'-विचित्रः प्रसरः, तस्य योऽसौ 'भरः'-समुद्रेकः तस्मात्-इति। भगवतः किल स्वशक्तिविकासस्फार एव जगन्निर्माणम्। यदुक्तं श्रीसर्वमङ्गलाशास्त्रे

'शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।
शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः॥'

इति। किं-रूपा अण्डचतुष्टयसंख्या ?-इत्याह 'शक्तिर्माया, प्रकृतिः, पृथ्वी च'इति। विश्वस्य-प्रमातृप्रमेयरूपस्य पराहन्ताचमत्कारसारस्यापि स्वस्वरूपापोहनात्माख्यातिमयी निषेधव्यापाररूपा या पारमेश्वरी 'शक्तिः' सैव आच्छादकत्वेन बन्धकतया शक्त्यण्डम्-इत्युच्यते। सदाशिवेश्वर-शुद्धविद्यातत्त्वपर्यन्तदलं सत्

पं० ८ घ० पु० शक्तयश्च इति पाठः।
पं० ९ ग० घ० पु० चतुःसंख्येति पाठः।
पं० १४ ग० घ० पु० शक्त्यण्डमुच्यते इति 'इति' शब्दहीनः पाठः।



वक्ष्यमाणम् अण्डत्रितयम् अन्तः समन्तात् गर्भीकृत्य अवतिष्ठते-इति कोशरूपतया एषा शक्तिः अनेन शब्देन संज्ञिता। एतस्मिन् अण्डे सदाशिवेश्वरावेव अधिपती।

अन्यच्च मलत्रयस्वभावं मोहमयं भेदैकप्रवणतया सर्वप्रमातॄणां बन्धरूपं पुंस्तत्त्वपर्यन्तदलं मायाख्यमण्डम्-इत्युच्यते। तच्च वक्ष्यमाणम् अण्डद्वयम् अन्तः समन्तात् स्वीकृत्य स्थितम्। अण्डाधिपतिश्च अत्र गहनाभिधानो रुद्रः।

तथा सत्त्वरजस्तमोमयी 'प्रकृतिः' कार्यकरणात्मना परिणता सती, पशुप्रमातॄणां भोग्यरूपा सुखदुःखमोहरूपतया बन्धयित्री प्रकृत्यभिधानम् अण्डम्-इत्युच्यते। तत्रापि महाविभूतिः श्रीभगवान् विष्णुर्भेदप्रधानोऽण्डाधिपतिः।

तथा 'पृथ्वी' च एवं मनुष्यस्थावरान्तानां

पं० ११ ग० घ० पु० कारणतात्मना इति पाठः।
पं० १३ ख० घ० पु० अण्डमुच्यते इति 'इति' शब्दहीनः पाठः।

प्रमातॄणां प्रतिप्राकाररूपतया स्थूलकञ्चुकमयी बन्धयित्री– इति कृत्वा पृथ्व्यण्डम्–इति उच्यते। तत्रापि चतुर्दशविधे भूतसर्गे प्रधानतया अण्डाधिपो भगवान् ब्रह्मा–इति। एवं परमेश्वरविजृम्भितम् इदम् अण्डचतुष्टयं भगवता इत्थं प्रकाशितं परिस्फुरति ॥ ४ ॥

एवं एतत् अण्डचतुष्टयं प्रतिपाद्य अत्रैव भोग्यभोक्तृत्वप्रतिपादनपरतया विश्वस्वरूपनिरूपणाय कारिकामाह.

तत्रान्तर्विश्वमिदं
विचित्रतनु-करण-भुवनसंतानम्।
भोक्ता च तत्र देही
शिव एव गृहीतपशुभावः ॥ ५ ॥

[४] यदुक्तम्

'शक्त्यण्डमृत्पिण्डमुपाददानो मायाण्डचक्रभ्रमणक्रमेण।
मूलाण्डदण्डेन मुहुर्विधत्ते ब्रह्माण्डभाण्डं भगवान् कुलालः ॥'

इति। मूलं प्रकृतिः, मूलाण्डं प्रकृत्यण्डमित्यर्थः।

पं० १ ख० घ० पु० 'प्रमातॄणाम्' इति पदं नास्ति। क० पु० प्राकारतया इति, घं० पु० प्रकाररूपया इति पाठः।

पं० २ क० घ० पु० 'कृत्वा' इति पदं नास्ति।



'तत्र'- तेषु चतुर्षु अण्डेषु आगमप्रसिद्धेषु 'विश्वम् इदम् अन्तर्'-मध्ये वर्तते। कीदृशम्!– इत्याह 'विचित्र' इति। रुद्र-क्षेत्रज्ञभेदाभिन्ना नानामुखहस्तपादादिरचनारूपाः 'तनवः'= आकारा=विशिष्टसंस्थानरूपेण आश्चर्यभूताः। तथा अन्योन्यभेदेन सातिशयानि 'करणानि' चक्षुरादीनि। तद्यथा – रुद्रप्रमातॄणां निरतिशयानि सर्वज्ञत्वादिगुणगणयुक्तानि, तैः किल सर्वमिदम् एकस्मिन् क्षणे युगपत् ज्ञायते, संपाद्यते च। क्षेत्रज्ञानां पुनरेतान्येव करणानि परमेश्वरानियतिशक्तिनियन्त्रितानि सन्ति घटादिपदार्थमात्रज्ञानकरणसमर्थान्येव, न तैः सर्वं ज्ञायते, नापि क्रियते। तत्रापि योगिनाम् अतिशयः करणानाम्,– यत् नियतिशक्तिसमुल्लङ्घनात् तदीयैः करणैः दूरव्यवहितविप्रकृष्टमपि परिच्छिद्यते, परप्रमातृगतं च सुखदुःखा-

पं० १० ख० ग० घ० पु० पुनस्तान्येव इति पाठः।

पं० १६ ख० ग० घ० परप्रमातॄणां च इति पाठः।



दि ज्ञायते। एवं च तिरश्चामपि नियतिशक्त्या संकुचितानामपि मनुष्येभ्योऽपि अतिशयः करणानां विद्यते। तद्यथा—गावः स्वगृहं व्यवहितमपि पश्यन्ति, अश्वा रात्रावपि मार्गम् ईक्षन्ते, गृध्रा योजनशतगतमपि आमिषम् अवलोकयन्ति, पक्षिणो मक्षिका मशकपर्यन्ता आकाशविहारिणो दृश्यन्ते, सरीसृपा उरसा पन्थानं गच्छन्ति, दृशा च शृण्वन्ति शब्दान्, उष्ट्रा दूरादपि गर्तात् श्वासमात्रेण सर्पमाकर्षयन्ति—इति। एवं सर्वत्र करणवैचित्र्यम् ऊह्यम्। तथा 'भुवनानि' आगमप्रसिद्धानि वर्तुल-त्र्यश्र-चतुरश्रार्धचन्द्र-छत्राकारतया सातिशयसंस्थानानि—इति। एवं 'विचित्रो' नानातिशयाद्भुतस्वभावः एषां 'तनुकरणभुवनानां संतानः'-अविरतबन्धप्रवाहो यस्मिन् विश्वस्मिन् तत् एवं-विधं विश्वम्। एवं-विधे च अत्र भोग्यस्वभावे वि-

पं० १ ग० पु० नियतशक्त्यसंकुचितेति पाठः।
पं० ४ ख० ग० घ० पु० पन्थानं समीक्षन्ते इति पाठः।
पं० ६ घ० पु० दूरादपि गन्तार इति पाठः।
पं० १४ ख० ग० घ० पु० तेषाम् इति पाठः।



अस्मिन् भोक्ता भाव्यम्—इत्याह 'भोक्ता च तत्र देही' इति। मलत्रयाघ्रातो देहो भोगायतनं विद्यते यस्य अणोः स 'देही' सुखदुःखादिस्वभावः शरीरी, सुखदुःखादिमये अस्मिन् 'भोक्ता' सुखदुःखाद्यनुभविता पशुप्रमाता—इति कथ्यते। ननु परप्रमात्रपेक्षया अणुमात्रस्यापि न भेदो विद्यते, कुतः तद्व्यतिरिक्तो देही नाम वराकः। यदुक्तम्

'प्रदेशोऽपि ब्रह्मणः सार्वरूप्यम्
अनतिक्रान्तश्च अविकल्प्यश्च।'

इति।

'एकैकत्र च तत्त्वेऽपि षट्त्रिंशत्तत्त्वरूपता।'

इति न्यायाच्च एक एव स्वशक्तियुक्तो महाप्रकाशवपुरेव परमेश्वरः प्रमाता सर्वतोऽभिन्न एव अवभासते। ततो भिन्नस्य अप्रकाशमानस्य देहिनोऽस्तित्वाभ्युपगमेऽपि प्रकाशमानत्वा-

पं० २ ख० पु० मलत्रयाघातदेह इति। घ० पु० मलत्रयाघ्रातदेह इति पाठः।
पं० ६ घ० पु० प्रादेशोऽपि ब्राह्मणः सार्वरूप्यानतिक्रान्त इति पाठः।
पं० १३ ग० घ० पु० न्यायेन इति पाठः।

नुपपत्तेः न सत्ता निश्चीयते। प्रकाशते चेत्,
तस्मिन् परब्रह्मात्मनि तर्हि प्रकाशाभिन्न एव
एकः प्रमाता—इति, पुनरपि किंपरत्वेन अयं
भोग्यभोक्तृलक्षणः सन् भेदः!— इति सर्वं स-
मर्थयमान आह 'शिव एव गृहीतपशुभावः'
इति। योऽयं भगवान् समनन्तरं प्रतिपादितः
चिदानन्दैकघनः स्वातन्त्र्यस्वभावः 'शिवः'
स एव स्वरूपगोपनासतत्त्वः सन्, स्वेच्छया, नट
इव, देहप्रमातृभूमिकां समापन्नः, पाल्यत्वात्
पशुत्वात् पशुसत्तालक्षणश्च सुखदुःखादिमये
स्वयं-निर्मिते अस्मिन् भोग्ये भोक्ता देही—इति
कथ्यते, न पुनः शिवव्यतिरिक्तं किंचित् पदा-
र्थजातम् अस्ति। एष एव च भगवान् शिवः
स्वातन्त्र्यात् भोक्तृभोग्यलक्षणं प्रमातृप्रमेययु-
गलकं क्रीडनकमिव समुत्थापयति, यदपेक्षया
अयं भेदप्रधानो व्यवहारः। तस्मात् एतदेव

पं० ७ ख० पु० स्वस्वातन्त्र्येति पाठः।
पं० १० घ० पु० सुखदुःखमये इति पाठः।



परमेश्वरस्य स्वातन्त्र्यं निरतिशयं, यत् पूर्णस्व-
रूपतापरित्यागेन भोक्तृभोग्यस्वभावं पशुभावम्
आपन्नोऽपि सर्वप्रमातृणाम् अनुभवितृतया
स्वात्मनि प्रस्फुरन् चिदानन्दैकघनः, शिव एव
॥ ५ ॥

एवमपि एकश्चित्स्वभावः प्रमाता, स यदि
मायादिप्रमातृप्रमेयवैचित्र्येण-नानात्वात् अने-
कः—इति कथं विरुद्धयैकतया व्यवह्रियते, एक-
श्चेत् किमिति नानारूपः—इति, छायातपवत्
विरोधात् विरुद्धधर्माध्यासः समापतति, न पु-
नः अनेकरूप एकश्च पदार्थः स्यात्। यदुक्तम्

'अयमेव भेदो भेदहेतुर्भावानां, यत् विरुद्धधर्मा-
ध्यासः कारणभेदो वा।'

इति। लौकिकम् अत्र दृष्टान्तं प्रदर्शयन् दार्ष्टा-
न्तिके चोद्यं समर्थयते

पं० ६ ख०ग०घ०पु० चैतन्यस्वभाव इति पाठः।
पं० ११ क०घ०पु० एकानेकरूप इति पाठः।

(colour shades) Similarly the Lord also takes the shape of dieties, men, animals and vegetation trees etc. etc.



नानाविधवर्णानां
रूपं धत्ते यथाऽमलः स्फटिकः ।
सुरमानुषपशुपादप-
रूपत्वं तद्वदीशोऽपि ॥ ६ ॥

'यथा' एकोऽपि 'स्फटिकमणिः' तत्तल्लाक्षानीलाद्युपाधिवैचित्र्यसहस्रेण तत्तद्वैचित्र्यं स्वात्मनि धारयन् तथा विचित्रितो भवति, न पुनः तस्य स्फटिकताहानिः एतावता समुत्पद्यते । एतदेव स्फटिकमणेर्मणित्वम्, यत् तत्तद्विशेषेण आच्छुरितेऽपि तस्मिन्, स्फटिकमणिः अयम्—इति अबाधिता सर्वस्य सर्वदैव प्रतीतिः । केवलम् अत्र अमी लाक्षादयः स्फुरन्ति—इति व्यवह्रियते, न पुनः लाक्षाद्युपाधिः पटमिव तं विशिनष्टि, येन स्वरूपविप्रलोपोऽस्य स्यात् । तस्मात् एतदेव अमलत्वं मणेः यत् उपाधिरूपान् आकारान् बिभर्ति, स्वस्वरूपतया च प्रथते । तथैव अयम् ईश्वरः स्वतन्त्रः चिदेकघन ए-



कोऽपि स्वच्छे स्वात्मदर्पणे देव-मनुष्य-पशु-पक्षि-स्थावरान्तानां रुद्र-क्षेत्रज्ञादिपदार्थरूपाणां विशेषाणां स्वयं निर्मितानां च 'रूपत्वं' वर्णवैचित्र्यं स्फटिकमणिवत् स्वात्माभेदेन धारयन्, ततोऽपि समुत्तीर्णत्वात् अहम्—इत्येवम् अखण्डचमत्कारोपबृंहितं नानारूपमपि एकं स्वात्मानं प्रत्यवमृशति । इत्थमपि अस्य एकताखण्डनामयो भिन्नरूपो देशः, कालो वा न कश्चित् विद्यते, यदपेक्षया एतस्य स्वात्ममहेश्वरस्य विरुद्धधर्माध्यासादिदूषणम् उच्यतापि । साक्षात्कारलक्षणं चित्रज्ञानं नानाभेदसंभिन्नमपि परैरपि एकमेव तत् अभ्युपगतम् । यथा

'नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक् ।
अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन् ॥'

इति प्रमाणवार्तिके । किं पुनः सर्वतः पूर्णस्य ज्ञातुः चिदेकवपुषः स्वतन्त्रस्य, यौ इमौ देशकालौ भेदकतयाऽभिमतौ मूर्तिवैचित्र्य-क्रियावैचित्र्याभ्यां यस्य समुल्लासकतया स्थितौ, कथं

कालक्रमः देशक्रमः



तस्यैव भगवतो व्यवच्छेदकौ स्याताम्। यदि नाम देशकालयोः कदाचित् संविदो भेदेन स्थितिरभविष्यत्, तदा तत्कृतोऽपि विरुद्धधर्माध्यास उदपत्स्यत—इति तत्र संभावना स्यात्। यावता तयोः संवित्प्रकाशेनैव स्वात्मसत्तासिद्धिः—इति सिद्ध एव अनेकस्वभावोऽपि एक एव महेश्वरः चिन्मूर्तिः, भेदधर्मे पुनः विरुद्धधर्माध्यासो दुरुद्धर एव— इति ॥ ६ ॥

ननु एक एव संवित्सतत्त्वः प्रमाता अभ्युपगतः, तनु-करण-भुवनतां समापन्नः सन् स एव अनेकतां यातः—इति चेत्, तर्हि तन्वादिविनाशे स एव विनष्टः स्यात्, तदुत्पत्तौ वा एष एव तदा उत्पद्येत। एवं प्रतिप्रमातृ स एव जायते, अस्ति—इत्यादिषड्भावविकारतया व्यवच्छिद्यते, पुण्यपापस्वभावकर्मवैचित्र्येण एतस्यैव भगवतः स्वर्गनरकादिभोगः प्राप्तः—इति कथम् उच्यते—स्वस्वरूप एव शिवः?—इति ॥

पं० ६ ख० पु० सिद्ध एकानेकस्वभाव इति पाठः।
पं० १६ ख० ग० घ० पु० वैचित्र्येण च तस्येति पाठः।



दृष्टान्तद्वारेण एतदपि समर्थयते

गच्छति गच्छति जल इव
हिमकरबिम्बं स्थिते स्थितिं याति।
तनु-करण-भुवनवर्गे
तथाऽयमात्मा महेशानः ॥ ७ ॥

यथा जलप्रवाहे याति सति, 'हिमकरबिम्बं' चन्द्रवपुः वस्तुवृत्तेन आकाशस्थं स्वयम् अचलत्तात्मकं, जलप्रवाहान्तःपतितमपि तत् 'गच्छति' प्रयाति 'इव' तथा तस्मिन्नेव क्षणे अन्यत्र जलाशये निःस्तिमिते सति, तदेव 'हिमकरबिम्बं स्थितिं' गच्छति इव—इति उभयथा [illegible]मातृभिः एतत् संभाव्यते, न पुनः परमार्थेन तत् तथैव स्यात्। नापि जलगतौ देशकालौ भेदकतया चन्द्रमसः स्वरूपं गगनस्थं परामृशतः, केवलं जलमेव तादृशम्, अथ च

पं० ८ ग०पु० प्रवाहान्तःप्रतिबिम्बितमिति पाठः।
पं० ९ ख०पु० तथैव तस्मिन् इति, घ०पु० तथैतस्मिन् इति पाठः।
पं० ११ क०पु० तत्रैव स्थितिमिति पाठः।

तत्प्रतिबिम्बितस्य चन्द्रबिम्बस्य जलगतचल-
त्वाचलत्वादिको भेदो व्यवह्रियते–इति एताव-
ता गङ्गाजलगतस्य, कर्दमपतितस्य वा शशि-
नः स्वस्वरूपतायां न काचित् क्षतिः । 'तथैव
अयमात्मा' चैतन्यस्वभावः स्वयं निर्मिते 'तनु-
करण-भुवनसमूहे' परिक्षीणे सति, समुत्पन्ने
वा प्रक्षीणः , समुत्पन्नश्च–इति मायाव्यामोहि-
तानां व्यवहारमात्रम् एतत् जलगतचन्द्रवत् , न
पुनः स्वात्मा जायते, म्रियते वा–इति । गीतासु
एवमेव उक्तम्

'न जायते म्रियते वा कदाचित्
नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥'(२।२०)

इति । तस्मात् अयम् आत्मा महेशानः स्व-
तन्त्रः सर्वस्वात्मप्रत्यवमर्शस्वभावः, सर्वप्रमा-
तृणाम् अनुभवितृतया प्रथमानः, ततः तत्तद-



वस्थाविप्रलोपे, समुत्पत्तौ वा, स्वस्वरूप एव ।
एतदेव च दुर्घटकारि महेशानत्वं संवित्तत्त्वस्य,
यत् तथा तथा पशुप्रमातृतया स्वर्गनरकादि-
भोगभोक्ताऽपि सर्वानुभवितृतया संवित्स्वरूप
एव । प्रत्युत पुण्यपापस्वर्गनरकक्षुत्पिपासादि-
को योऽयं पशुभावो बन्धकतया नियतः, स
यदि भगवता स्वात्मप्रकाशेन प्रकाशितः परा-
मृष्टश्च स्यात्, तदा यथोक्तां स्वात्मनि सत्तां
लभते, अन्यथा निःस्वभाव एव एष–इति क-
थं स्वात्मनः तस्यैव महेशस्य स्वरूपविप्रलो-
पाय उच्यते । सर्वथा निर्मितमेव वस्तु संहा-
र्यं, समुत्पाद्यं वा देहादिरूपं स्यात्, न पुनः
नित्ये भगवति चैतन्ये समुत्पत्तिविनाशौ कदा-
चित् भवेताम् । तस्मात् एक एव आत्मा ग्रा-
ह्यग्राहकतया नानारूपस्वभावः सन्, पुनरपि
सर्वानुभवितृतया सर्वस्य एकतया प्रथते–इति

पं० १ ग०घ०पु० वा स्वरूपरूप एवेति पाठः ।
पं० ११ ग०घ०पु० उच्येत इति पाठः ।

न काचित् अद्वयवादक्षतिः ॥ ७ ॥

इत्थमपि सर्वेषाम् अयम् आत्मा विश्वप्रप-
ञ्चस्वभाव एव संविन्मात्रपरमार्थः सर्वावभासः
सर्वत्र संविदनुगमात्—इति युक्त्यागमाभ्यां प्र-
तिपादितश्चेत्, किमिति लोष्टादावपि अविशेषा-
त् स्वात्मतया स न प्रतीयते, अभ्युपगमे वा
जडाजडव्यवस्था इयं भासमाना न संगच्छते,
लोकव्यवहारश्च जडाजडरूपः—इति कथमेतत्
स्यात्?—इति आह

राहुरदृश्योऽपि यथा
शशिबिम्बस्थः प्रकाशते तद्वत् ।
सर्वगतोऽप्ययमात्मा
विषयाश्रयणेन धीमुकुरे ॥ ८ ॥

आकाशदेशे 'राहुः' सर्वत्र परिभ्रमन्नपि न
उपलभ्यते, स एव पुनः ग्रहोपरागकाले चन्द्र-
मूर्तिस्थः प्रथमानः, अयं राहुः—इति परीक्ष्य-



ते, अन्यथा स्थितोऽपि भचक्रेऽस्थित इव। त-
थैव इहापि सर्वान्तरतमत्वेन स्थितोऽपि 'अय-
म् आत्मा' स्वानुभवैकस्वरूपतया प्रत्यक्षपरि-
दृश्यमानः सर्वस्य तथा न उपलक्ष्यते । यदा
पुनः पुर्यष्टकप्रमातॄणां बुद्धिदर्पणे-प्रतिभामुकुरे
ग्राह्यव्यवस्थाकाले शब्दादिविषयस्वीकारेण
'शृणोमि' इत्येवम् अहं-प्रतीतिविषयो भवति,
तदा ग्राहकस्वभावतया लोष्टादावपि स्थितः
सन् स्फुटरूपः, तत्रैव स्वात्मा 'प्रकाशते' स-
र्वैश्च स्वानुभवैकरूपः प्रतीयते; लोष्टादौ अत्य-
न्ततमोमयत्वात् स्थितोऽपि अस्थितकल्पोऽसौ
प्रथते, राहुर् आकाशे यथा । एवम् अयं भ-
गवान् मायाशक्त्या स्वात्मकल्पेऽपि भाववर्गे
कांश्चित् पुर्यष्टकस्वरूपान्-वेद्यखण्डानपि अ-

पं० १ क० घ० पु० अस्थित एवेति पाठः ।
पं० ६ क०ख०पु० ग्राह्यावस्थाकाले इति पाठः
पं० १० ग०पु० लोष्टादावपि इति पाठः ।
पं० १३ ख०पु० स्वाङ्गकल्पे इति पाठः ।

हन्ताऽव्यवस्थारसाभिषिक्तान् वेदकीकरोति, कांश्चित् वेद्यीकरोति, यदपेक्षया अयं जडाजडव्यवस्थास्वरूपो भेदव्यवहारः सुस्थित एव उपपद्यते । तेन लोष्टादिः वेद्यत्वात् जडः, वेदकत्वात् पुर्यष्टकप्रमातापि अजडः । न पुनः परमार्थेन परमेश्वरापेक्षया जडाजडव्यवहारः—इति ॥ ८ ॥

ननु सर्वप्रमातॄणां बुद्धौ चेत् स्वात्मनोऽपि अविशेषेण प्रस्फुरणं, तर्हि ते सर्वे किमिति स्वात्मविदो न स्युः, तज्ज्ञानवन्तो मा वा भूवन्, विशेषाभावात् । यत् पुनः संसारावस्थायामपि केचन स्वात्मज्ञानात् जीवन्मुक्ताः सर्वज्ञत्व-सर्वकर्तृत्वशालिनः, केचन स्वात्मज्ञानयोग्या आरुरुक्षवश्च दृश्यन्ते, अपरे स्वात्मज्ञानरहिताः सन्तो धर्माधर्मनिमित्त-शुभाशुभकर्म- निगडप्रबन्धबद्धाः संसारिण एव,-इति कथम् एतत् संगच्छ-

पं० ३ ख०पु० स्वस्थित इति पाठः।
पं० ६ ख०पु०परमार्थत्वेन इति पाठः।



ते? इत्थम् अन्तः सर्वं कृत्वा पारमेश्वरः शक्तिपातो विशृङ्खलः,—इति प्रतिपादयति

आदर्शे मलरहिते
यद्वद् वदनं विभाति तद्वद् अयम् ।
शिव-शक्तिपातविमले
धीतत्त्वे भाति भारूपः ॥ ९ ॥

दर्पणे मालिन्यरहिते यथा निर्विशेषरूपादिगुणगणयुक्तं मुखं चकास्ति।—न स देशोऽस्ति यं विनिवृत्तमल आदर्शो न स्वीकुरुते । समले दर्पणे तु मुखम् अनन्यातिशयमपि ध्यामलत्वात् वैपरीत्येन प्रकाशते। नापि मलिनः तदीयान् गुणान् स्वीकर्तुम् अलम्। प्रत्युत तद्व्यस्तमुखः पुमान् मुखम् अन्यथैव ध्यामलत्वाद्युपेतम् अवलोक्य स्वात्मनो लज्जाम् आवहति 'विकृ-

पं० ८ ग०घ०पु० सः अंशोऽस्ति इति पाठः।
पं० १० क०पु० श्यामलत्वादिति पाठः।
पं० १३ क०पु० श्यामलेति पाठः।

तं मद्वदनम्' इति।—तथैव 'शिवस्य' स्वात्मनो या असौ अनुग्रहाख्या 'शक्तिः', तस्याः 'पातः' स्वकिरणविस्फारः, तेन संमार्जिते प्रतिभामुकुरे आणव-मायीय-कार्ममलवासनाप्रच्चयात् विशदीकृते, केषांचित् अपश्चिमजन्मनां प्रमातॄणां 'भाः'—प्रकाशो 'रूपं' यस्य—इति स 'भारूपः' स्वात्मा यावत्सर्वज्ञत्वादिगुणगणयुक्तः तावानपि अवभासते, येन केचनैव ते स्वात्मस्वरूपप्रथनात् संसारमध्यपतिता अपि मुक्तकल्पाः सातिशयाश्च। केषांचिदेव परमेश्वरतिरोधानशक्त्या आणव-मायीय-कार्ममलसमाच्छादिते बुद्धितत्त्वे भारूपोऽपि आत्मा मालिन्यात् भातोऽपि अभातकल्पः, येन ते सांसारिकाः पशवः—इति अभिधीयन्ते ; अन्येऽपि उभयशक्तियोगात् प्रमातार आरुरुक्षवः—इति। इत्थं तीव्र-मन्द-मन्दतरादिभेदेन शक्तिपातवैचित्र्यं

पं० १ ख०पु०तथैवास्य स्वात्मन इति पाठः।
पं० ७ क०पु० तावानसाविति, ग०घ०पु०तावानस्यावभासेति पाठः।
पं० १४ क०पु०शक्तियोगाः इति पाठः।



सर्वत्रापि ऊह्यम् ॥ अत्र न मायान्तःपातिनियतिशक्तिसमुत्थम्, अश्वमेधादिकं जपध्यानादि वा अन्यत् यत्किंचित् कर्म मोचनहेतुः आत्मनः ; तस्य हि मायातः समुत्तीर्णत्वात् भेदप्रधानं वस्तु तत्साधनाय न प्रकल्पते। यत् गीतम्

'नाहं वेदैर्न तपसा न दानेन न चेज्यया।'
(भ०गी०११।५३)

इति। तस्मात् एकमेव अत्र परमेश्वरानुग्रहः कारणम् अकृत्रिमम् भव्यबुद्धीनाम्। यदुक्तम्

'ईशितुः शक्तिपातांशे ख्यापयित्री स्वतन्त्रताम्।
धीः कारणकलाघ्राता नैव किंचिदपेक्षते ॥'

इति। पशुप्रमातॄणां तु परमेश्वरतिरोधानशक्तिः संसरणहेतुरेव, येन एते स्वस्वरूपाप्रथनात् शुभाशुभकर्मनिरताः, सुखदुःखादिभोगभाजः पुनः पुनः अस्मिन् संसरन्ति। तस्मात्

पं० १ ख०ग०घ० पु० सर्वत्राभ्यूह्यम् इति पाठः।
पं० ३ क०ग०घ०पु० आत्मज्ञानस्य हि इति पाठः।

प्रमातॄणां साधारणेऽपि स्वात्मनि, प्रकाशाप्रकाशरूपे अनुग्रहतिरोधानशक्ती द्वे एव; ते मोक्षबन्धप्रविभागहेतू। यदुक्तम् (अवधूतसिद्धपादैः)

'बध्नाति काचिदपि शक्तिरनन्तशक्तेः
तत्रैव मग्नमहिता भवपाशजालैः।
ज्ञानासिना च विनिकृत्य गुणान् अशेषान्
अन्या करोत्यभिमुखं पुरुषं विमुक्तौ॥'

इति ॥ ६ ॥

एवम् इदं सर्वम् आगमानुभवयुक्तियुक्तं प्रतिपाद्य, यत् प्राक् शक्त्याद्यण्डचतुष्टयं प्रतिपादितं तदन्तरालवर्ति समुत्पत्तिक्रमेण षट्त्रिंशत्तत्त्वात्मकं जगत् यन्निमग्नं भाति, तत् प्रथमतः कारणकारणं परमशिवस्वरूपं कारिकाद्वयेन आह।

भारूपं परिपूर्णं
स्वात्मनि विश्रान्तितो महानन्दम्।
इच्छासंवित्करणैर्
निर्भरितम् अनन्तशक्तिपरिपूर्णम्॥

पं० २ ख० पु० द्वे एवैते इति पाठः।



सर्वविकल्पविहीनं
शुद्धं शान्तं लयोदयविहीनम्।
यत् परतत्त्वं तस्मिन्
विभाति षट्त्रिंशदात्म जगत्
॥१०।११॥

'यत्' एवं-विधं 'परं' पूर्णं शिवतत्त्वं, तत्र शिवादिधरापर्यन्तं वक्ष्यमाणं विश्वं विश्रान्तं सत् प्रकाशते,—तदभिन्नमेव चकासत् युक्त्या उपपद्यते—इति यावत्। ननु तन्यते सर्वं तन्वादि यत्र तत् तत्त्वं; तननात् वा तत् आप्रलयं, तस्य भावः—इति वा तत्त्वम्; इति एवमपि तत्त्वव्यपदेशोऽयं जाड्यापादकः कथं चिद्रूपे भगवति परमशिवे स्यात्?— उच्यते। उपदेश्यजनापेक्षया यावता शब्देन प्रतिपाद्यते, तावता तत्र तत्त्वव्यपदेशो, न वस्तुतः। कीदृशं तत् परं तत्त्वं? 'भाः' प्रकाशो 'रूपं' स्वभावो यस्य, महाप्रकाशवपुः—इत्यर्थः। तथा

पं० २ घ० पु० लयोदयेति पाठः।

'परिपूर्णं' निराकाङ्क्षम् । निराकाङ्क्षमपि स्फटिकमणिदर्पणादि जडं वस्तु भवति—इत्याह 'स्वात्मनि विश्रान्तितो महानन्दम्' इति । 'स्वस्मिन्' स्वभावे अखण्डाहन्ताचमत्काररसे विश्रमात् 'महान् आनन्दः' परा निर्वृतिः यस्य—इति । तत् एवं परमाह्लादकस्फुरत्तासारत्वात् प्रकाश्यस्फटिकादेः जडात् वैलक्षण्यम् उक्तं भवति । अत एव आह 'इच्छासंवित्करणैर्निर्भरितम्' इति । इच्छा-ज्ञान-क्रियाशक्तिस्वभावमेव, न पुनः शान्तब्रह्मवादिनामिव शक्तिविरहितं जडकल्पम् । अन्यच्च 'अनन्तशक्तिपरिपूर्णम्' इति । 'अनन्ताः' निःसंख्या घटपटाद्या नामरूपात्मिकाः 'शक्तयः' इच्छा-ज्ञान-क्रियाशक्तीनां पल्लवभूता ब्राह्मयाद्याः शक्तयः शब्दराशिसमुत्थाः, ताभिः 'परितः' समन्तात् 'पूर्णं' व्याप्तं, तत एव उल्लसन्त्यः तत्रैव शाम्यन्ति—इति । एवं परावाग्रूपं भगवति स्वातन्त्र्यम् उक्तं स्यात् । ननु वाग्रूपं चेत् परं तत्त्वं, तर्हि



काल्पनिकं शब्दसंभिन्नत्वात्, कथं शुद्धप्रकाशवपुषि कल्पनायोगः?—इत्याशयेन आह 'सर्वविकल्पविहीनम्' इति । परप्रमातरि योऽयं पराहन्ताचमत्कारः स वाग्रूपोऽपि निर्विकल्पः । विकल्पो हि अन्यापोहलक्षणो द्वयं घटाघटरूपम् आक्षिपन् अघटाद् व्यवच्छिन्नं घटं निश्चिनोति । प्रकाशस्य पुनः पराहन्ताचमत्कारसारस्यापि न अप्रकाशरूपः प्रकाशात् अन्यः प्रतिपक्षतया विद्यते, यद्व्यवच्छेदात् तस्य विकल्परूपता स्यात् । व्यवच्छेद्यो हि अर्थोऽप्रकाशात्मा प्रकाशवपुषि प्रकाशते चेत्, तर्हि

'तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः ।' (स्प० ३।२८)

इत्यादिन्यायेन योऽपि अर्थः प्रकाशस्वभावतां यातः सन्, स कथं स्वात्मनः तस्यैव व्यवच्छेदकः स्यात्, येन विकल्परूपतां तत्र समावहेत् । अथ प्रतिपक्षतया न प्रकाशते—इति, क-

पं० १ क० पु० शब्दवद्भिन्नत्वात् इति पाठः ।
पं० ५ क० पु० घटपटरूपमाक्षिपन् न घटाद्व्यवच्छिन्नं पटम् इति पाठः ।

थम् 'इह अप्रकाशमानः पदार्थः प्रतिपत्तृरूपोऽस्ति' इति परिच्छेत्तुमपि शक्येत?-इति यत् किंचित् एतत् स्यात्। यतः 'सर्वैः' व्यवच्छेदात्मकैः 'विकल्पैर्विहीनम्' अपरिच्छिन्नस्वभावं परं तत्त्वम्। अत एव आह 'शुद्धम्' इति विमलं, विकल्पमय्या अशुद्धिमय्या अभावात्। तथा 'शान्तम्' इति। ग्राह्यग्राहकसमुत्थक्षोभाभावात् शक्तिसामरस्येन स्वस्वरूपस्थं, न पुनः अश्मशकलकल्पम्। अन्यच्च 'लयोदयविहीनम्' इति।

'सकृद्विभातोऽयमात्मा।' (श्रु०        )

इति कृत्वा सनातन एव। अतो भूतभविष्यद्वर्तमानवपुः कालः तत्र न क्रमते, यतः कालस्य तत एव समुल्लासः—इति समुत्पत्तिविनाशबहिष्कृते परतत्त्वेऽभ्युपगते विश्वस्य विश्वत्वम्

पं० ६ क०पु० अशुद्धिमय्या इति पाठः।
पं० ६ घ० पु० लयोदयेति पाठः।
पं० १२ ग० पु० विश्वरूपत्वम् इति पाठः।

...ities, villages etc (i.e different objects) ...ole as if, separate from the mirror and ...eparate from each other, although they



उपपन्नम्—इति प्रतिपादितं स्यात् ॥ ११ ॥

ननु एवं-विधे परतत्त्वे जगत् भाति—इति यत् प्रतिपादितं, तत् कथम् एतत् स्यात्, यावता परतत्त्वापेक्षया न किंचित् भेदेन भातुं प्रगल्भेत? ततो भिन्नं चेत् जगत् भासते, तदा अद्वयवादखण्डना; अभिन्नं चेत्, 'जगत् प्रकाशते' इति कथं वाचोयुक्तिः?-इति दृष्टान्तद्वारेण तद्भेदाभेदरूपं तत्त्वम् उपदर्शयन् एतत्समर्थनाय आह

दर्पणबिम्बे यद्वन्
नगरग्रामादि चित्रमविभागि।
भाति, विभागेनैव च
परस्परं दर्पणादपि च ॥ १२ ॥

विमलतमपरमभैरव-
बोधात् तद्वद् विभागशून्यमपि।
अन्योन्यं च ततोऽपि च
विभक्तमाभाति जगदेतत् ॥ १३ ॥

पं० १० ख० ग० पु० ग्रामादि विचित्रम् इति पाठः।

are inseparable (i.e one) with the mirror;
Similarly, this world, although
inseparable from the ...

Knowledge mirror, looks (or is felt) separate in its own different parts and also from that Master Knowledge



यथा निर्मले मुकुरान्तराले, नगर-ग्राम-पुर-
प्राकाराट्ट-स्थल-नद-नदी-ज्वलन-वृक्ष-पर्वत-प-
शुपक्षि-स्त्रीपुरुषादिकं सर्वं प्रतिबिम्बतया 'चि-
त्रं' स्वालक्षण्येन नानारूपं भासते; 'अविभागि'-
दर्पणात् अविभक्तं सत् 'भाति'-तदभेदेनैव अ-
न्तर् आकारं समर्पयति; तत्र अभेदेन भास-
मानमपि भाति 'विभागेनैव च परस्परम्' इ-
ति अन्योन्यस्वालक्षण्येन घटात् पटो भिन्नः,
पटात् घटः—इति विभक्ततया स्फुरति । तद-
न्तर्गता हि भावा एव पृथक्त्वेन परामृश्यन्ते,
न पुनः तं दर्पणं त्यक्त्वा पृथक् किंचित् उ-
पलभ्यते, किंतु दर्पणसामरस्येन स्थितमपि
सर्वतो भिन्नं जगत् प्रतीयते । एवमपि घटा-
दिप्रतिबिम्बेन दर्पणस् तर्हि अन्तर्हितः स्यात्—
इति, एतत् न—इत्याह 'दर्पणादपि च' इति ।
न केवलं स्वयं भावा दर्पणान्तर्गता अपि भिन्नाः
प्रकाशन्ते, यावत् दर्पणादपि व्यतिरिच्यन्ते;

पं० ३ ख० ग० पु० विचित्रमिति पाठः ।

पं० १२ क० पु० स्थितमपि सर्वं प्रतीयते इति । ग० घ० पु० सर्वं स्वतो भिन्नमिति पाठः ।



थतो दर्पणः तत्तत्प्रतिबिम्बमयोऽपि तेभ्यः प्र-
तिबिम्बेभ्यः समुत्तीर्णस्वरूपतया चकास्ति, न
पुनः तन्मयः संपद्यते, येन च 'न दर्पणः' इति
प्रतीतिः स्यात् । सर्वस्य पुनः तत्तत्प्रतिबिम्ब-
ग्रहणेऽपि 'दर्पणोऽयम्' इति अबाधिता प्रति-
पत्तिः । नापि घटादिः दर्पणं विशिनष्टि, येन
'अयं घटदर्पणः, अयं पटदर्पणः' इति स्वस्वरू-
पताहानिः अत्र जायेत । देशकृतः कालकृतो
वा भेदो न तत्र स्वभावविप्रलोपाय भवति ।
तस्मात् तत्तत्प्रतिबिम्बसहिष्णुः सन् स्वात्मनि
दर्पणो दर्पण एव,—इति न काचित् प्रतिबिम्ब-
वादक्षतिः । अथ उच्यते भ्रान्तिरेषा—यत् उत
दर्पणे हस्ती—इति परामृश्यते, नतु पुनः दर्प-
णे स कश्चित् विद्यते, तथात्वेन अर्थक्रियावि-
रहात्, भ्रान्त्यैव एष निश्चयः—इति । एतावता
प्रतिबिम्बवादेन दृष्टान्तः तावत् सिद्धः । भ्रा-

पं० १४ क० पु० दर्पणे किंचित् विद्यते इति पाठः ।

पं० १५ क० पु० निश्चयो भाति इति पाठः ।

न्तेस्तु स्वरूपं समनन्तरं निरूप्यते । 'तद्वत्' तथैव दर्पणनगरादिप्रतिबिम्बदृष्टान्तेन 'विमलतमपरमभैरवबोधात्' अतिशयेन विगलितकालिकात् पूर्णानन्दोद्रिक्तात् प्रकाशात् 'जगत्' विश्वम् 'विभागशून्यमपि' दर्पणप्रतिबिम्बवत् ततः प्रकाशात् अविभक्तमपि, परस्परं च विभक्तत्वेन ग्राह्यग्राहकापेक्षया नानारूपं प्रथते; ततोऽपि च' इति बोधादपि उन्मग्नमिव 'आभाति, यतो बोधः तद्रूपतयापि प्रथमानः ततः समुत्तीर्णः प्रथते, यथा प्रतिबिम्बेभ्यो दर्पणः । एवमपि विश्वभावप्रतिबिम्बसहिष्णुः प्रकाशो विश्वभावेभ्यः समुत्तीर्णः सर्वस्य अनुभावितृतया स्वस्वरूपेण प्रथते । भावगतोऽपि देशकालाकारभेदः केवलम् अत्र प्रकाशते दर्पणवत्, न पुनः स्वं रूपं संभिनत्ति । अत एव एकानेकस्वरूपोऽपि बोध एक एव, बौद्धाभ्युपगतचित्रज्ञानवत् । किंतु दर्पणप्रकाशात् सचमत्कारस्य

पं० ५ क० ग० घ० पु० भ्रान्तेस्तु तत्तरं समनन्तरमिति पाठः ।
पं० १६ क० पु० ज्ञातृबोधेति, क० ख० पु० बोधाद्युपगतेति पाठः ।
पं० १७ क० पु० दर्पणसकाशात् इति पाठः ।



चित्प्रकाशस्य इयान् विशेषः,—यत् दर्पणे स्वच्छतामात्रसनाथे भिन्नं बाह्यमेव नगरादि प्रतिबिम्बत्वेन अभिमतं भाति, न तु स्वनिर्मितम्, अतो दर्पणे 'अयं हस्ती' इति यो निश्चयः, स भ्रान्तः स्यात्; प्रकाशः पुनः स्वचमत्कारसारः स्वेच्छया स्वात्मभित्तौ अभेदेन परामृशन् स्वसंविदुपादानमेव विश्वम् आभासयति । विश्वस्य आभासनमेव निर्मातृत्वं भगवतः,—इति परामर्श एव प्रकाशस्य, जडात् दर्पणप्रकाशादेः वैलक्षण्यापादकं मुख्यं रूपम्—इति । एतदेव ग्रन्थकृता विवृतिविमर्शिन्याम् उक्तम्

'अन्तर्विभाति सकलं जगदात्मनीह
यद्वद् विचित्ररचना मकुरान्तराले ।
बोधः पुनर्निजविमर्शनसारयुक्त्या
विश्वं परामृशति, नो मकुरस्तथा तु ॥'

पं० २ ख० ग० घ० पु० नगरग्रामादि इति पाठः ।
पं० ५ ख० पु० स्वचमत्कारस्वच्छायाम् इति पाठः ।
पं० १३ ग० घ० पु० यद्विश्वचित्ररचना इति पाठः ।
पं० १५ घ० पु० विश्वं प्रकाशयति इति पाठः ।

Five Powers (Icha, Gian, Kriya, ...) Shows out the five Tattwas (Shiv Rupa, Shakhti Rupa, Sadashiv Rupa, Ishwar Rupa and Shuddha Vidya Rupa)



इति। इत्थं परमेश्वरापेक्षया स्वाङ्गनिर्मिते भावराशौ न काचित् भेदभ्रान्तिः, मायाप्रमात्रपेक्षया तु योऽयं भेदावभासः, एषा पूर्णत्वाख्यातिरूपा भ्रान्तिः;–पूर्णस्य अद्वयात्मनो रूपस्य अख्यानम् अप्रथा; पूर्णं न भासते, किंतु अपूर्णं द्वयरूपं भासते; भेद एव प्रतीयते–इति यावत्। तस्मात् निरवद्योऽयं प्रतिबिम्बवादः ॥ १३ ॥

इत्थं परतत्त्वस्वरूपानिरूपणपूर्वं प्रकाशाभेदेन जगतः षट्त्रिंशत्तत्त्वात्मकस्य स्थितिं विधाय, पुनरपि एतस्य समुत्पत्तिक्रमेण प्रतितत्त्वं स्वरूपं कारिकाभिः प्रतिपादयति

शिव-शक्ति-सदाशिवता-
　मीश्वर-विद्यामयीं च तत्त्वदशाम्।
शक्तीनां पञ्चानां
　विभक्तभावेन भासयति ॥ १४ ॥

पं० ३ घ० पु० बोधावभास इति पाठः।
पं० ४ क० पु० अथ पूर्णं रूपम् इति पाठः।
पं० ६ घ० पु० परतत्त्वनिरूपणापूर्वम् इति पाठः।



योऽयं परमशिवः परतत्त्वनिरूपणाया समनन्तरप्रतिपादितस्वरूपः, स्वस्वरूपरूपाः याः शक्तयः चिन्निर्वृतीच्छा-ज्ञान-क्रियाख्याः पञ्च अनन्तशक्तिव्रातहेतुभूताः, तासामेव 'पञ्चानां शक्तीनां' भिन्नत्वेन अतद्व्यावृत्त्या इमां 'तत्त्वदशां' पञ्चसंख्यावच्छिन्नामेव 'भासयति'–स्वालक्षण्येन प्रकटयति–इत्यर्थः। कीदृशीं ताम्?–इत्याह 'शिव' इत्यादि। शिवश्च शक्तिश्च सदाशिवश्च, तेषां भावो यस्याः सा तथोक्ता तां, तथा 'ईश्वरविद्ये' प्रकृतिः यस्यां सा तथा–इति। अत्र प्रतितत्त्वं स्वरूपं प्रदर्श्यते। तथाहि–सर्वप्रमातॄणाम् अन्तः पूर्णाहन्ताचमत्कारमयं सर्वतत्त्वोत्तीर्णं महाप्रकाशवपुः यत् चैतन्यम्, एतदेव शिवतत्त्वम्। अत्र तत्त्वनिरूपणम् उपदेश्यजनापेक्षया–इति। तस्यैव भगवतः चिद्रूपस्य आनन्दरूपा, 'विश्वं भवामि' इति परामृ-

पं० २ ख० ग० घ० पु० प्रतिपादितस्वभाव इति पाठः।
पं० १६ ग० घ० पु० विश्वं न भवामीति पाठः।

शतो विश्वभावस्वभावमयी संविदेव किंचिदुच्छूनतारूपा सर्वभावानां बीजभूमिः, इयं शक्त्यवस्था । एषैव विश्वगतसृष्टिसंहारोपचारात् कृशपूर्णोभयरूपापि एकैव सर्वरहस्यनयेषु गीयते । पुनरपि अत्रैव विश्वसमुत्पत्तिबीजभूमौ महाशून्यातिशून्याख्यायां, महेशस्य 'अहमिदम्' इति अभेदेन पूर्णाहन्तामयो यः चमत्कारो ज्ञानप्राधान्यात् क्रियाभागस्य अहन्ताविश्रान्तेः, सेयं सदाशिवदशा । अत्र मन्त्रमहेश्वराः प्रमातारः तिष्ठन्ति । तथा अत्रैव 'अहमिदम्' इति अभेदेन अहन्तेदन्तयोः समधृततुलापुटन्यायेन यः स्वात्मचमत्कारः, सैषा तस्य ईश्वरावस्था। अत्रापि मन्त्रेश्वराः प्रमातारः। अत्रापि इदन्ताप्राधान्येन अहन्तागुणीकारेण यः, 'अहम् अहम्, इदम् इदम्' इत्येवंरूपः चमत्कारः सद्योजातबा-

पं० १ ग० घ० पु० विश्वाभावस्वभावेति च पाठः ।

पं० ६ क० पु० शून्याख्या महेशस्येति, ग० घ० पु० शून्यायां महेशस्येति पाठः ।

पं० १० क० पु० तथैवाहमिदमिति पाठः ।

पं० ११ क० पु० समावृतपटन्यायेनेति पाठः ।



लस्येव शिरोऽङ्गुलीनिर्देश्यः, एतदेव बोधसारत्वात् भगवतः शुद्धविद्यातत्त्वम् । अत्र विद्येश्वरैः सह सप्तकोट्यस्तु मन्त्राणां वाचकतया अनुग्रहस्वभावात् पशून् उद्धर्तुं वाच्यान् मन्त्रमहेश्वरमन्त्रेश्वरान् प्रति अवतिष्ठन्ते । अत्र विद्यातत्त्वे विद्येश्वरप्रमातॄणां, बोधरूपत्वाविशेषेऽपि या भेदप्रथा सा मायाशक्तिकृतैव,—इति आगमेषु गीयते

'मायोपरि महामाया …………।'

इति । येन तत्रस्था मन्त्रा महामायानुप्रवेशात् अणवः—इति उच्यन्ते । मायातत्त्वोपरि शुद्धविद्याधश्च विज्ञानाकलाः प्रमातारः, आणवमलभाजनम् । एवम् एकमेव इदं शिवस्वरूपं तुर्यातीतमपि तुर्यरूपतया तत्त्वपञ्चकतया गीयते । तस्मात् एक एव एष स्वतन्त्रः कर्ता प्रकाशते, यस्य 'अहमिदम्' इति सदाशिवेश्वरभूमौ यः प्रकाशः, एतदेव शुद्धवेदनरूपं करणं; वक्ष्यमाणो मायातत्त्वादिधरान्तः तत्त्वसर्गश्च कार्य-

पं० १७ क० पु० कारणमिति, ख० ग० पु० वक्ष्यमाणमिति पाठः ।

पं० १८ क० पु० तत्त्वमार्ग इति पाठः ।

सः—इत्येवं कर्तृकरणक्रियारूप एक एव स्वात्म-महेश्वराख्यः परमप्रमाता विजृम्भते ॥ १४ ॥

मायातत्त्वस्वरूपम् आह

परमं यत् स्वातन्त्र्यं
दुर्घटसंपादनं महेशस्य।
देवी मायाशक्तिः
स्वात्मावरणं शिवस्यैतत् ॥१५॥

'परमम्' अनन्यापेक्षं 'यत्' परमेशितुः 'स्वातन्त्र्यं' विश्वनिर्मातृत्वं, सैव इयं 'मायाख्या शक्तिः' तस्य शक्तिमतः। मीयते—परिच्छिद्यते धरान्तः प्रमातृप्रमेयप्रपञ्चो यया सा माया; विश्वमोहकतया वा माया। एषा देवस्य-क्रीडाशीलस्य संबन्धिनी—इति कृत्वा 'देवी', न पुनः ब्रह्मवादिनामिव व्यतिरिक्ता काचित् माया उपपद्यते--इति। कीदृशं तत् स्वातन्त्र्यं? 'दुर्घटसंपादनम्' इति दुःखेन घटयितुं श-

पं० ३ क० पु० मायातत्त्वमाहेति पाठः।



क्यम्—इति 'दुर्घटस्य' कार्यस्य प्रमातृप्रमेयरूपस्य 'संपादनं' प्राप्तिप्रापकम्। एषैव माया स्वेच्छया पशुभावम् आपन्नस्य 'शिवस्य स्वात्मावरणं'—स्वरूपगोपनाख्यम् आणवादिमलत्रितयम् ॥ १५ ॥

वक्ष्यमाणे च प्राधानिके सुखादिरूपे भिन्ने भोग्ये, यत् भोक्तृरूपं पुंस्तत्त्वं, तत्स्वरूपम् आह

मायापरिग्रहवशाद्
बोधो मलिनः पुमान् पशुर्भवति।
काल-कला-नियतिवशाद्
रागाविद्यावशेन संबद्धः ॥ १६ ॥

'माया'-स्वीकारपारतन्त्र्यात् सर्वज्ञत्व-सर्वकर्तृत्वमयोऽपि 'बोधः' सर्वज्ञत्वादिगुणापहस्तनेन अख्यातिरूपम् आणवं मलम् आपन्नः, येन

पं० ३ क० ग० पु० पशुतापन्नस्येति पाठः।
पं० १० क० पु० नियतिबलादिति पाठः।

घटाकाशवत् पूर्णस्वरूपात् चिदाकाशात् अवच्छेद्य-परिमितीकृतः सन्, तदेव पुंस्तत्त्वम् उच्यते। अतो मायायाः पाल्यः पाश्यश्च–इति 'पशुः' आणव-मायीय-काममलस्वभावानां पाशानां भाजनम्। अन्यच्च 'कालकला' इति वक्ष्यमाणस्वरूपैः 'कालादिभिः' ओतप्रोततया सम्यक् 'बद्धो'- दृब्धः–इत्येवं तत्त्वषट्कवेष्टितं पुंस्तत्त्वम् ॥ १३ ॥

कालादीनां तत्त्वानां च एतद्वेष्टनक्रमेण स्वरूपम् आह

अधुनैव किंचिदेवे-
दमेव सर्वात्मनैव जानामि।
मायासहितं कञ्चुक-
षट्कमणोरन्तरङ्गमिदमुक्तम् ॥१७॥

इत्थं स्वतन्त्रोऽपि बोधः स्वमायया यथा अणुत्वं प्राप्तः, तथैव तदीये ज्ञानक्रियाशक्ती

पं० १ ख० पु० अवच्छिद्येति पाठः।



संकुचिते अस्य पशुरूपस्य विद्या-कले–इति उच्येते। यथा राज्ञा अपहृतसर्वस्वस्य अनुकम्पया जीवनार्थं किंचिद् धनं स्तोकं दीयते, तथैव अणुत्वम् आपन्नस्य बोधस्य अपहृतसर्वज्ञत्वादेः किंचित्कर्तृतापरमार्थं ज्ञत्वम् उपोद्बल्यते,–इति ज्ञत्वस्यैव प्राधान्यात् कालादीनां जानातिना अन्वयो दर्शितः। 'इदं कञ्चुकषट्कम्' उक्तरूपया मायया युक्तम् 'अणोः' आणवमलापहस्तितसर्वज्ञत्वादेः पुंसः स्वरूपाच्छादकम्, स्वर्णस्य कालिकेव 'अन्तरङ्गं' निजं कथितम्। किंरूपम्?–इत्याह 'अधुना' इत्यादि। 'अधुनैव जानामि' इति सोऽणुः वर्तमानतया, इदं प्राक् मया ज्ञातं, जानामि, ज्ञास्यामि–इति; एवमपि कृतं, करोमि, करिष्ये वा–इति ज्ञानक्रियास्वरूपेण भावानपि तथा कलयन् अवच्छिनत्ति च–इत्येषोऽस्य कालः। तथा 'किंचिदेव' इति अवच्छिन्नमेव करोति,

(१) ध्रुवस्थानीयमात्मानमवच्छिद्य भूतभविष्यद्वर्तमानतया इत्यर्थः।

पं० ५ क० ख० ग० पु० परमार्थं ज्ञातुम् इति पाठः।

पं० १५ ख० ग० पु० ज्ञानस्वरूपेणेति पाठः।

सर्वं कर्तुं न अलम्; घटमात्रकरणाय प्रभवति, न पटादौ;—इत्येतद् अस्य अणोः कलातत्त्वम्। 'इदमेव' इति नियतात् कारणात् नियतं कार्यं यत् अर्थयते, यथा वह्नेरेव धूमः, अश्वमेधादिकर्मण एव स्वर्गादिफलम्, न सर्वस्मात्;—इत्येवं नियमेन स्वसंकल्पकृत-कर्मप्रबन्धसमुत्थ-पुण्यापुण्यैः आत्मा नियम्यते येन, तत् अस्य नियतितत्त्वम्। तथा 'सर्वात्मना' इति या इयम् अपूर्णम्मन्यता, सर्वं मम इदम् उपयुज्यते; भूयासं, मा कदाचित् न भूवम्;—इत्येतत् पशोः रागतत्त्वम्। बुद्धिधर्मो यो रागः, स एकत्र कुत्रापि कान्तालक्षणेऽर्थे अन्यत् अपोह्य, 'अत्र मे रागः' इति अभिष्वङ्गमात्रं, न सर्वाकाङ्क्षामयस्य रागतत्त्वस्य समानः। तथा 'जानामि' इति किंचिदेव पुरोवर्ति घटादिकं, न पुनर् दूरव्यवहितं वस्तु;—इति विद्यातत्त्वम्। शुद्धविद्यापेक्षया कारिकायाम् 'अविद्या' इति कथितम्, न पुनर् वेदनाभावात्। 'मायासहितं' भेद-

pervading knowledge and activity) when it gets on the Right path of Shaivism just as rice gets clean from its enwraping powder which in fact separate looks like one with the rice itself.



प्रथायुक्तम् एतत् कञ्चुकषट्कं पशोः—इति ॥ १७ ॥

कथम् एतस्य कञ्चुकषट्कस्य अणुं प्रति अन्तरङ्गत्वम्?—इत्याह

कम्बुकमिव तण्डुलकण-
विनिविष्टं भिन्नमप्यभिदा।
भजते तत्तु विशुद्धिं
शिवमार्गौन्मुख्ययोगेन ॥ १८ ॥

वास्तवेन वृत्तेन 'भिन्नमपि कम्बुकं' यथा 'अभिदा तण्डुलकणविनिविष्टम्' इति अभेदेन तण्डुलान्तश्च ऊतं भासते, निपुणैरपि यत्नतः प्रक्षिप्यमाणं तण्डुलस्य अन्तरङ्गत्वात् न पृथक् अवतिष्ठते, तथा एतत् मायादिकञ्चुकम् अणोः तण्डुलस्थानीयस्य अन्तरङ्गत्वात् कम्बुकस्थानीयं व्यतिरिक्तमपि, अव्यतिरिक्ततया पूर्णसंवित्स्वरूपम् आच्छाद्य स्थितम्—इति शेषः। एवमपि दुर्निवारं कथं तत् विलीयते?—

पं० १० क० ख० ग० पु० तण्डुलान्तश्च अन्ते इति पाठः।
पं० १२ ग० पु० तथैव मायेति पाठः।



इत्याह 'भजते' इत्यादि। 'तुः' विशेषे, न अन्यः अत्र उपायः। 'शिवस्य' स्वात्ममहेश्वरस्य योऽसौ 'मार्गः' 'परमाद्वयचिदानन्दैकघनोऽस्मि, ममैव इदं विश्वं स्वशक्तिविजृम्भणमात्रम्' इति या स्वात्मस्वरूपविभूतिप्रत्यवमर्शरूपा सरणिः, 'तदौन्मुख्यं' दार्ढ्येन तन्निभालनपरत्वं, स एव 'योगः' पूर्णरूपतया अणोः स्वात्मनि स्वस्वरूपत्वेन संबन्धः, तेन 'तत्' उक्तस्वरूपं कञ्चुकं विशेषेण-'शुद्धिं भजते' स्वयमेव निःशेषेण विलयं सेवते। एतदुक्तं स्यात्—यदा परमेश्वरशक्तिपातविशुद्धहृदयः पशुर्भवति, तदा 'अहमेव महेश्वरः' इति स्वात्मज्ञानाविर्भावात् स्वयमेव पशुत्वापादकं कञ्चुकावरणं विलीयते, न पुनर् अत्र स्वात्मज्ञानं विहाय मायीयं किंचित् नियतिशक्तिसमुत्थं कर्म प्रगल्भते—इति ॥ १८ ॥

एवं-विधस्य अणोः भोक्तुश्च भोग्येन भा-

पं० ६ ग० पु० तदौन्मुख्यदार्ढ्येन इति, घ० पु० तदौन्मुख्यदार्ढ्यं तन्निभालनेति पाठः।



व्यम्,—इति प्राधानिकं तत्त्वसर्गम् आह

सुख-दुःख-मोहमात्रं
निश्चय-संकल्पनाभिमानाच्च।
प्रकृतिरथान्तःकरणं
बुद्धि-मनोऽहङ्कृति क्रमशः॥१९॥

सत्त्व-रजस्तमसां यत् 'सुख-दुःख-मोहात्मकं' सामान्यं रूपम्,—अङ्गाङ्गिभावो यत्र न उपलभ्यते—सा मूलकारणं 'प्रकृतिः'। प्रकृतेः अनन्तरं कार्यरूपम् अन्तःकरणम् आह 'निश्चय' इत्यादि। 'निश्चयः' इदम् एतादृक्—इति, 'संकल्पनं' मननम्, 'अभिमानो' ममता—इति क्रमेण 'बुद्धिः, मनो, ऽहंकारः' इति, एवं-रूपं त्रितयम् 'अन्तःकरणम्' अङ्गाङ्गिभावेन गुणानां कार्यं, भूतेन्द्रियाद्यपेक्षया च कारणम्—इति ॥ १९ ॥

बाह्यकरणम् आह

श्रोत्रं त्वगक्षि रसना
घ्राणं बुद्धीन्द्रियाणि शब्दादौ ।
वाक्पाणि-पाद-पायू-
पस्थं कर्मेन्द्रियाणि पुनः ॥ २० ॥

वक्ष्यमाणे 'शब्दादौ' विषये, ज्ञानप्रधानानि 'श्रोत्रादीनि' पञ्च इन्द्रियाणि, क्रियाप्रधानानि च इन्द्रियाणि पञ्च 'वागादीनि'।—वचनादान-विहरण-विसर्गानन्दात्मकाः कर्मेन्द्रियाणां विषयाः। —इति उभयथा च 'शृणोमि, कथयामि' इति अहंकारानुगमात् अहंकारकार्याणि ॥ २० ॥

एषां शब्दादिविषयस्वरूपं कथयति

एषां ग्राह्यो विषयः
सूक्ष्मः प्रविभागवर्जितो यः स्यात् ।
तन्मात्रपञ्चकं तत्
शब्दः स्पर्शो महो रसो गन्धः ॥ २१ ॥

पं० १ क० ख० पु० त्वक्चक्षू इति पाठः ।
पं० ४ घ० पु० वक्ष्यमाणशब्दादाविति समस्तः पाठः ।



ज्ञेय-कार्यतया स्वीकार्यो 'यः एषाम्' इन्द्रियाणां 'विषयो' गोचरः 'स्यात्'। स कीदृशः? 'प्रविभागवर्जितः' विशेषेण बहिष्कृतः सामान्यात्मा 'सूक्ष्मो' योऽर्थो भवेत्, 'तदेव शब्दादि' सामान्यरूपं 'तन्मात्रं' शब्दसामान्यं, शब्दतन्मात्रम्—इति। एवम् अन्यानि। विषय-विषयिणोः परस्परापेक्षित्वात् इन्द्रियवत् इदमपि 'तन्मात्रपञ्चकम्' आहङ्कारिकमेव—इति ॥ २१ ॥

विषयाणां परस्परसांकर्येण पृथिव्यादीनि कार्यम्—इत्याह

एतत्संसर्गवशात्
स्थूलो विषयस्तु भूतपञ्चकताम् ।
अभ्येति नभः पवन-
स्तेजः सलिलं च पृथ्वी च ॥ २२ ॥

'एतेषां संसर्गवशात्' परस्परसंघर्षसामर्थ्यात् यो विशेषः 'स्थूलो विषयः' स एव भू-



sice on all the sides, in the same way this worldly formation from Prakriti to Prithvi covers the Sentient Lord by making it feel that it is the body.



तद्रूपतां याति। तथाहि—शब्दतन्मात्रात् शब्दविशेषो नभो जायते, शब्दस्पर्शाभ्यां पवनः, रूपसंयुक्ताभ्याम् एताभ्यां तेजश्च, एभ्यो रसयुक्तेभ्यश्च आपः, गन्धसंयुक्तेभ्यश्च पृथ्वी,—इति पञ्च महाभूतानि, 'कार्यं कारणानुगुणम्' इति कृत्वा एकोत्तरगुणानि;—इति। एवम् एषा प्रकृतिः कार्यकारणात्मा पुरुषस्य परमेश्वरस्य इच्छया भोग्यतया प्रवृत्ता,—इति षट्त्रिंशत्तत्त्वात्मकं जगत् विभज्य प्रतितत्त्वं निरूपितम्॥ २२॥

मायाकञ्चुकवत् प्रकृतेः कञ्चुकतां पुरुषं प्रति आह

तुष इव तण्डुलकणिका-
मावृणुते प्रकृतिपूर्वकः सर्गः।
पृथ्वीपर्यन्तोऽयं
चैतन्यं देहभावेन॥ २३॥

'अयमपि' प्राधानिकः 'सर्गो' धरापर्यन्तः 'तण्डुलकणं' यथा 'तुषो' धान्यचर्म 'आवृ-



णुते' समाच्छादयति, तथैव मायाकञ्चुकेन कम्बुकस्थानीयेन समावृतं 'चैतन्यं' पुनरपि तुषस्थानीयेन 'देहभावेन' एतत् समावृणुते, तत्प्रतिप्राकारतया स्थगयति। अत्र इमे प्रमातारः, कलाभिः इन्द्रियमात्राभिः विशेषान्ताभिः देहस्वभावाः सकलाः—इति उच्यन्ते, विशेषवर्जिता विदेहाः प्रलयाकलाः—इति च। एवं शिवादि-सकलान्त-प्रमातृसप्तकसनाथं रुद्र-क्षेत्रज्ञाधिष्ठितं जगत्—इति॥ २३॥

कञ्चुकत्रितयस्य पर-सूक्ष्म-स्थूलरूपताम् आह

परमावरणं मल इह,
सूक्ष्मं मायादि कञ्चुकं, स्थूलम्।
बाह्यं विग्रहरूपं,
कोशत्रयवेष्टितो ह्यात्मा,॥ २४॥

चैतन्यस्य स्वस्वरूपापहस्तनसतत्त्वा अख्यातिरेव आणवो 'मलः' आन्तरः, स्वर्णस्य कालि-

In this way Anava Mala (egoistic feeling) is the subtle deep covering, Maya etc the sixfold entanglement is the Abstract covering and

केव 'परम्'-अन्तरङ्गम् 'आवरणं'-छादनम्, तादात्म्येन स्थितत्वात्। 'मायादि-'विद्यान्तं कञ्चुकषट्कं 'सूक्ष्मम्' आत्मन आवरणम्, तण्डुलस्य कम्बुकमिव आवरणं पृष्ठपातित्वेन आस्ते, येन भेदमयी ज्ञत्व-कर्तृत्वादिप्रथा प्रथते;–इति एष मायीयो मलः। एतदपेक्षया 'बाह्यं' तुषस्थानीयं प्राधानिकं शरीरसत्तालक्षणम् आवरणं 'स्थूलं' त्वङ्मांसादिरूपत्वात्; एष तृतीयः कार्मो मलः, येन प्रमाता शुभाशुभकर्मसंचयभाजनं भवति। एवम् अनेन पर-सूक्ष्म-स्थूलरूपेण 'कोशत्रयेण वेष्टितो'-विकस्वरोऽपि घटाकाशवत् संकुचितीकृतः 'आत्मा' इति अणुः–इति, पशुः–इति उच्यते ॥ २४ ॥

एतत्संबन्धात् उपहत इव भवति–इत्याह

अज्ञान-तिमिरयोगाद्
एकमपि स्वं स्वभावमात्मानम्।
ग्राह्य-ग्राहकनाना-
वैचित्र्येणावबुध्येत ॥ २५ ॥

पं० १ क० पु० परमावरणमाच्छादकत्वेनेति, ख० पु० परमावरणं छादनमिति पाठः।



एष कोशत्रयसंबद्ध आत्मा, आत्माख्यात्यन्धकारसंबन्धात् 'एकमपि'-अद्वयस्वभावमपि 'स्वं'-निजं-न अन्यस्मात् उपनतम्, 'आत्मस्वभावं'-चैतन्यम्-आत्मसत्तालक्षणं स्वरूपं, प्रमातृ-प्रमाण-प्रमेयनानारचनाप्रपञ्चेन जानाति, अभेदविपरीतेन भेदेन अभिमन्यते,–इति यावत्। यथा रेखातिमिरोपहतः पुरुष एकमपि चन्द्रं पश्यन्, 'द्वौ चन्द्राविमौ नभसि स्तः' इति परिच्छिन्दन्, लोकमपि दर्शयति 'द्वौ चन्द्राविमौ पश्य' इति।–वस्तुवृत्तेन एक एव असौ चन्द्रः,–इति तिमिरवशात् तथा भासते, येन उद्वेगलक्षणाम् आनन्दलक्षणां वा अर्थक्रियां स तैमिरिकः प्राप्नोति।–तथैव अज्ञानतिमिरप्राप्तभेदप्रथः सर्वं स्वात्मनोऽभिन्नमपि भेदेन व्यवहरन् भिन्नं कर्मफलम् अर्थयते, येन भूयोभूयः स्वर्ग-निरयादिभोगभाक् भवति। अतश्च अज्ञानस्य तिमिरेण रूपणा, विपरीताभासनात् ॥२५॥

पं० १७ क० पु० तिमिररूपेण विपरीतेति पाठः।

आत्माद्वयं दृष्टान्तेन निदर्शयति

रस-फाणित-शर्करिका-
गुड-खण्डाद्या यथेक्षुरस एव ।
तद्वद् अवस्थाभेदाः
सर्वे परमात्मनः शंभोः ॥ २६ ॥

'रसादयः' इक्षुभेदा 'यथा' एक 'एव इक्षुरसः' परमार्थतः सर्वत्र माधुर्यानुगमात्, तथैव जाग्रदादि-'अवस्थाभेदा' ग्राह्य-ग्राहकप्रपञ्चरूपाः 'सर्वे' विशेषाः 'परमात्मनः'-स्वस्वभावस्य 'शंभोः'-चैतन्यमहेश्वरस्यैव। यतः स एव भगवान् सर्वस्य स्वात्मभूतः स्वस्वातन्त्र्यात् तां तामपि भूमिकां समापन्नः, तथा ग्राह्य-ग्राहकाद्यवस्थाविशिष्टः प्रथते, यथा इक्षुरसः ; न पुनः स्वात्मनः तस्मात् भिन्नं किंचित् अस्ति,-इति स एक एव, सर्वावस्थासु संविदनुगमात्। इत्थं सर्वत्र एकरूपतादर्शनात् प्रमाता सर्वदृश्वा भवति । यथाह श्रीशंभुभट्टारकः

पं० १२ घ० पु० समापतितः तथा तथा इति पाठः ।
पं० १५ ख०पु०एकरूपतानुगमात् इति, घ० पु०एकस्वरूपदर्शनादिति पाठः ।



'एको भावः सर्वभावस्वभावः
सर्वे भावा एकभावस्वभावाः ।
एको भावस्तत्त्वतो येन दृष्टः
सर्वे भावास्तत्त्वतस्तेन दृष्टाः ॥'

इति । भगवद्गीतास्वपि

'सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥'
(१८।२०)

इति ॥२६॥

तीर्थान्तरपरिकल्पितस्तु भेदः संवृत्यर्थम् अभ्युपगतोऽपि, न सत्यभूमौ अवकल्पते-इत्याह

विज्ञानान्तर्यामि-
प्राण-विराड्देह-जाति-पिण्डान्ताः ।
व्यवहारमात्रमेतत्
परमार्थेन तु न सन्त्येव ॥ २७ ॥

'विज्ञानम्' इति बोधमात्रमेव केवलम्-अनुपाधि-; नाम-रूपरहितमपि अनादिवासनाप्रबो-

धवैचित्र्यसामर्थ्यात् नील-सुखादिरूपं बाह्यरूपतया नाना प्रकाशते, –इति विज्ञानवादिनः ।

'पुरुष एवेदं सर्वम् ……………।'

'नेह नानास्ति किंचन ……………।'

इति न्यायेन 'अन्तर्यामि' सर्वस्य–इति परं ब्रह्मैव अनाद्यविद्यावशात् भेदेन प्रकाशते,–इति ब्रह्मवादिनः। अत्र उभयत्रापि वेदनस्य स्वातन्त्र्यं जीवितभूतं विश्वनिर्माणहेतुः,–इति न चेतितम्।

अन्ये, 'प्राण'-ब्रह्मवादिनस्तु यथाप्राणनमेव विश्वम् आगूर्य वर्तते, नहि प्राणनाद् ऋते अन्यत् किंचित् ब्रह्मणो रूपम्;–इति सविमर्शं शब्दब्रह्म,–इत्याहुः।

अपरे प्रतिपन्ना यथा 'विराड्देहम्' इति वैराजमपि ब्रह्मणः सत्यभूतम्,–इति। यथोक्तम्

'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ॥'

इत्येवमादि ।

'जातिः' इति महासत्तासामान्यलक्षणं स-



र्वगुणाश्रयं वस्तु परमार्थसत्,–इति वैशेषिकादयो ब्रुवते।

अन्ये 'पिण्डा' इति व्यक्तय एव परमार्थसत्यो, नहि सामान्यं नाम किंचित् एकम् अनेकगुणाश्रयं प्रकाशते, नापि उपपद्यते वा;–इति व्यक्तीनामेव व्यवहारः परिसमाप्तः, किं सामान्येन, – इति नानावृत्तिविकल्पैः सामान्यं विवदमाना, 'व्यक्तयो न अनुयन्ति, अन्यदनुयायि न भासते' इति एवमादि बहु ब्रुवन्तो, 'जातिर्न परमार्थः' इति प्रतिपन्नाः;–इत्येव 'विज्ञानादिः पिण्डोऽन्ते' येषां भेदानां ते तथोक्ताः, 'व्यवहारमात्रम् एतत्' इति अस्मिन् स्वातन्त्र्यवादे प्रकाशमानस्य वस्तुनोऽनपह्नवनीयत्वात् एते भेदाः संवृतिसत्यत्वेन प्रकाशन्ते, 'परमार्थेन तु न सन्त्येव' इति, न पुनः सत्त्वतया एते भेदाः; तीर्थान्तरपरिकल्पितभेदा

पं० १ क० ख० घ० पु० परमार्थ सत् इति पाठः।
पं० १० क० ख० पु० परमार्थत इति पाठः।
पं० १४ घ० पु० संवित्तिसत्यत्वेन इति पाठः।

विद्यमाना एव। तस्मात् एक एव परमप्रकाश-परमार्थः स्वतन्त्रः चैतन्यमहेश्वर इत्थमित्थं च-कास्ति, यतोऽन्यस्य एतद्व्यतिरिक्तस्य अप्रकाशरूपस्य प्रकाशमानताभावात्। यदुक्तम्

'तीर्थक्रियाव्यसनिनः स्वमनीषिकाभि-
रुत्प्रेक्ष्य तत्त्वमिति यद्यद् अमी वदन्ति।
तत् तत्त्वमेव भवतोऽस्ति न किंचिदन्यत्
संज्ञासु केवलमयं विदुषां विवादः॥'

इति॥ २७॥

इदानीं भ्रान्तेः असदर्थप्रतिपादनसामर्थ्येन निदर्शनम् आह

रज्ज्वां नास्ति भुजङ्ग-
स्त्रासं कुरुते च मृत्युपर्यन्तम्।
भ्रान्तेर्महती शक्ति-
र्न विवेक्तुं शक्यते नाम॥ २८॥



'भ्रान्तेः' पूर्णत्वाख्यातिरूपाया अताद्रूप्यप्रतिभासने 'महती शक्तिः'—उत्तमं सामर्थ्यं 'न' केनचित् 'विवेक्तुं शक्यते' न केनचित् विचारयितुं पार्यते,—इति यावत्। यथा वस्तुवृत्तेन रज्जुः परिदृश्यमाना, दीर्घत्व-कुण्डलिनीरूपत्वभ्रमात् 'सर्पोऽयम्' इति अध्यवसातॄणां रज्जुद्रव्येऽपि असदर्थप्रतिभासोऽयं सर्पाध्यवसायः सदर्थप्रतिभासात् भयं मरणावसायं विदधाति। अनुभवसिद्धमपि एतत् 'स्थाणुं भूतम्' इति मत्वा, स्वयं भीषणीयं वा आकारं समुल्लिख्य भ्रान्ताः सन्तो हृद्भङ्गनाशं के नाम न याताः,—इति विभ्रम एव अपूर्णत्वप्रथने हेतुः—इति॥ २८॥

एतत् प्रकृते समर्थयते

तद्वद् धर्माधर्म-
स्वर्निरयोत्पत्ति-मरण-सुख-दुःखम्।
वर्णाश्रमादि चात्म-
न्यसदपि विभ्रमबलाद्भवति॥२९॥

पं० १ क० पु अपूर्णत्वाख्यातीति पाठः।

एवं यथा रज्जुः परमार्थसती भ्रान्त्या सर्पतया विमृष्टापि सर्पगताम् अर्थक्रियां करोति, तथैव देहात्ममानिनां चेतसि 'धर्मादि असदपि' तत्त्वतः अविद्यमानं, 'विभ्रम'-वशात् मायाख्यामोहसामर्थ्यात् एव 'भवति' 'एतदेव तत्त्वम्' इति भ्रान्त्या सत्तां लभते। 'धर्मः' अश्वमेधादिः, 'अधर्मो' ब्रह्महननादिः, 'स्वः' निरतिशया प्रीतिः, 'निरयो' यातना, 'उत्पत्तिः' जन्म, 'मरणं' जन्माभावः, 'सुखम्'-आह्लादः, 'दुःखं' राजसः क्षोभः, तथा 'वर्णो' ब्राह्मणोऽस्मि-इत्यादि, 'आश्रमो' ब्रह्मचारी-इत्यादि, 'आदि'-ग्रहणात् तपः-पूजाव्रतानि,-इति सर्वं कल्पनामात्रसारं विभ्रमविजृम्भितमेव मायाशक्त्या देहाद्यात्मतया अभिमन्यते। एतत् सर्वं भ्रान्तेः प्रभवति, यया अनवरतस्वर्ग-नरक-जन्म-मरण-प्रबन्धभाजः पशवः ; न पुनः परमार्थतः स्वात्मनोऽनवच्छिन्नचिदानन्दैकघनस्य धर्माधर्मादिकं किंचित् विद्यते-इति ॥ २९ ॥

एवम् असदर्थप्रातिभासने भ्रान्तेः सामर्थ्यं



विचार्य, तदुत्पत्तिम् आह

एतत् तद् अन्धकारं
यद् भावेषु प्रकाशमानतया ।
आत्मानतिरिक्तेष्वपि
भवत्यनात्माभिमानोऽयम् ॥३०॥

'एतत् तद् अन्धकारम्' इति एषा सा समनन्तरप्रातिपादिता विश्वमोहिनी पूर्णत्वाख्यातिरूपा भ्रान्तिः, 'यद् भावेषु' प्रमातृ-प्रमेयरूपेषु विश्ववर्तिषु पदार्थेषु 'प्रकाशमानतया' इति

'............... नाप्रकाशः प्रकाशते।'

इति प्रकाशमानतान्यथानुपपत्त्या, प्रकाशशरीरीभूतेषु 'आत्मनः' चैतन्यमहेश्वरात् अपृथग्भूतेषु सत्स्वपि, यः 'अयम्' अतिरेकेण अमी भावा ग्राह्या, बाह्या, मत्तो भिन्नाश्च-इति 'अनात्माभिमानो' वास्तवचिद्रूपतापहस्तनेन यत् तेषु अवास्तवं जडत्वापादनम्। अयमाशयः-भावप्रकाशने-अन्यस्य-अप्रकाशरूप-

स्य बाह्यवासनादेर्हेतोः अनुपपद्यमानत्वात्
स्वात्मप्रकाश एव स्वतन्त्रः, अर्थात् नीलसुखा-
दिना प्रकाशते ; अतः प्रमातृप्रमेयरूपतया चि-
त्स्वरूपोऽहमेव प्रकाशे,–इति यत् वास्तवं रूपं,
तत् न प्रकाशते, केवलमेव अवास्तवो भेदः प्र-
थते,–इति तात्त्विकप्रथनाभावात् भ्रान्तेः अन्ध-
कारेण रूपणम्–इति ॥ ३० ॥

आत्मनि अनात्माभिमानपूर्वोऽनात्मनि आ-
त्माभिमानो भवति,–इति प्रतिपादयन् भ्रान्तेः
सुतरां मोहरूपताम् आह

तिमिरादपि तिमिरमिदं
गण्डस्योपरि महानयं स्फोटः ।
यदनात्मन्यपि देह-
प्राणादावात्ममानित्वम् ॥ ३१ ॥

आदौ तावत् एकसंवित्सतत्त्वेष्वपि भावेषु
भेदमयं जाड्यापादनम् अख्यातितिमिरेण कृ-
तं, यत् स्वात्मनोऽभिन्नानां भावानां ततो भे-



देन प्रथनम् ; अत एव तिमिरमिव 'तिमिरम्'
अख्यातिः । यथा एकोऽपि चन्द्रः चक्षुस्थेन रे-
खातिमिरेण द्विधा भास्यते 'द्वौ चन्द्रौ' इति,
तथैव अख्यातितिमिरम् एकमपि सर्वं स्वात्म-
स्वरूपं वस्तु भेदेन अनात्मरूपं प्रकाशितवत् ।
एवम् अवस्थिते 'तिमिरम्' अपरम् आयात,
मोहात् मोहोऽयम् आपतितो, 'गण्डस्य उपरि'
पिटकोद्भवश्च ; 'यत्'–अख्यात्यपहस्तितचित्स्व-
रूपेष्वपि विश्ववर्तिषु पदार्थेषु जाड्यम् आपा-
दितेषु मध्यात् उद्धृते व्यतिरिक्ते जडे 'देहप्रा-
णादौ' वेद्यखण्डे कृशोऽहं, स्थूलोऽहं, क्षुधि-
तोऽहं, सुखी अस्मि, न किंचित् अहम्,–इति
प्रमातृतया अनात्मभूते 'आत्ममानित्वम्' अ-
ताद्रूप्ये ताद्रूप्यप्रतिपत्तिः, एतत् अतिवैशसम् ।
यदि तावत् आत्माभिमानेन विना वैशसम् अ-
स्ति, तत् नीलसुखादिष्वपि अस्तु, मा वा कु-
त्रापि भूत् ; यत् पुनः कतिपये जडे देहादौ लो-

पं० ६ क० पु० एवमेव स्थिते इति पाठः ।
पं० ७ ग० घ० पु० महामोहोयमिति पाठः ।

ष्टप्राये आत्मतया अहन्तारसाभिषेकः, अन्यत्र नील-सुखादौ इदन्तया अनात्मप्रतिपादनम्, एष एव पूर्णः संसारः शोचनीयो, यदभिमानो-उपनतो द्वन्द्वा[६]भिघातः कर्षति पशून्–इति। यदुक्तं मार्कण्डेयपुराणे योगिन्या मदालसया

'यानं क्षितौ यानगतश्च देहो
देहेऽपि चान्यः पुरुषो निविष्टः।
ममत्वमुर्व्यां न तथा यथा स्वे
देहेऽतिमात्रं च विमूढतैषा॥' (२५। १८)

इति॥ ३१॥

एवम् अख्यातिवशात् मिथ्याविकल्पैः इत्थम् आत्मानं बध्नाति–इत्याह

देह-प्राणविमर्शन-
धीज्ञान-नभःप्रपञ्चयोगेन।
आत्मानं वेष्टयते
चित्रं जालेन जालकार इव॥३२॥

६ द्वन्द्वेन सुखदुःखादिरूपेणाभिघातः पराभव इत्यर्थः।

पं० ८ 'ममत्वबुद्धिर्न तथा' इति, देहेऽतिमात्रं बत मूढतैषा इति च मूलपुराणे पाठः उपलक्ष्यते।



अख्यात्यपहस्तितचैतन्यः सर्वः प्रमाता स्वोत्थैः विकल्पनिगडैः व्यापकमपि 'आत्मानं वेष्टयते'। कथम्?–इत्याह 'देह' इत्यादि। 'देहप्राणयोः विमर्शनं, धियो ज्ञानं' निश्चयः, 'नभसां प्रपञ्चो' विस्तारः, 'तद्योगेन' देहादिविकल्पसंबन्धेन। यथा कृशः, स्थूलो, रूपवान् पण्डितश्च अस्मि,–इति बालाङ्गनापामराः कार्षिकाः इत्थं स्वविकल्पेन देहमेव आत्मत्वेन प्रतिपन्नाः, किंचिद्विवेचकंमन्याः।

देहस्तावत् इहैव प्रलीयते, कुतोऽस्य आत्मत्वम्?, अतो यः क्षुधितः पिपासितः सोऽहम्,–इति प्राणात्ममानिनश्च विवेचकंमन्यतराः।

देहप्राणौ जडौ लोष्टादिवत्, कुतोऽनयोः आत्मभावः?, ततः सुखी अहम्, दुःखी अहम्,– इति यः सुख-दुःखादि चेतते, स आ-

पं० ७ ग० पु० कार्षिका इति पदं नास्ति।
पं० ८ क० ग० घ० पु० आत्मतत्त्वेनेति पाठः।
पं० ९ क० ख० पु० केचिद्विवेचकमिति पाठः।
पं० १० ग० घ० पु० आत्मतत्त्वमिति पाठः।

त्मा,–इति पुर्यष्टकाभिमानिनो मीमांसकाद्योऽपि विवेचकतमाश्च ।

एतत् सुखदुःखाद्यपि बुद्धिधर्मः कथम् आत्मतया वक्तुं शक्यः?, ततो देह-प्राण-धीविकल्पानां यत्र अभावः स आत्मा,–इति शून्याभिमानिनः। एवं यत्किंचित् इदं भाति, तत् नाहम,–इति अप्रथारूपं शून्यमेव सर्वापोहनस्वभावम् आत्मा,–इति नभःशब्देन उक्तः। तदपि शून्यं यदा समाधानावसरे वेद्यीकुर्वते,–एतदपि शून्यं वयं न भवामः,–तदा शून्यान्तरम् आत्मत्वेन विदधानाः, 'न'इति, 'न'इति ब्रह्मवाद्यभ्युपगततत्तच्छून्यपरित्यागेन तां तां शून्यात्मतां परिगृह्णन्ति,–इति नभःप्रपञ्चः कारिकायां निरूपितः। इत्थं संवित्स्वरूपापर्यवसानात् शून्यात्ममानिनो योगिनः सुषुप्तगुहानिमग्ना जडात्मानो

पं० १ ग० पु० पुर्यष्टकात्ममानिन इति पाठः ।
पं० ५ ग० घ० पु० शून्यात्ममानिन इति पाठः ।
पं० १० क० पु० आत्मतत्त्वेनेति पाठः ।
पं० १५ घ० पु० सुषुप्तिखदा इति पाठः ।



भ्रान्ता एव आत्मानं संवित्स्वरूपमपि जाड्येन अनुबध्नन्ति । 'चित्रम्' इति आश्चर्यमेतत्–यत् उत वैशसं, न एतत् स्वयं कर्तुं पार्यते–इति। अत्र दृष्टान्तम् आह 'जालेन' इत्यादि। यथा 'जालकारः' कश्चित् कृमिर्वा स्वनिर्मितेन फेनेन जालम् आवरणं निर्माय, सर्वतो गतम् 'आत्मानं वेष्टयते' स्वं स्वात्मनिधनाय बध्नाति, येन उत्तरत्र तत्रैव निधनं याति; तथा देहाद्यात्ममानी तु स्वविकल्पकल्पितैः 'अहं, मम' इति विकल्पैः स्वात्मानमेव बध्नाति। तथा च बौद्धाः

'सत्यात्मनि परसंज्ञा
स्वपरविभागात् परिग्रहद्वेषौ।
अनयोः संप्रतिबद्धाः
सर्वे दोषाः प्रजायन्ते ॥'

इत्याहुः ॥ ३२ ॥

कथम् एष दुर्निवारो महामोहो देहादिप्रमातृतासमुत्थः प्रलीयते?–इति भगवत्स्वातन्त्र्यमेव अत्र हेतुः–इत्याह

पं० ६ ग० घ० पु० सर्वतोगतिमिति पाठः ।
पं० १० क० पु० स्वात्मनैवेति पाठः ।

स्वज्ञानविभवभासन-
योगेनोद्वेष्टयेन्निजात्मानम् ।
इति बन्धमोक्षचित्रां
क्रीडां प्रतनोति परमशिवः ॥३३॥

'स्वस्य'-आत्मनः चैतन्यलक्षणस्य यत् 'ज्ञानं' स्वस्वातन्त्र्यावगमः, तस्य 'विभवो'-देहाद्यभिमानविगलनेन यत् चित्स्वरूपे पराहन्ताचमत्काररूपस्य स्वस्वातन्त्र्यस्य स्फीतत्वं, चिदानन्दैकघनः स्वतन्त्रोऽस्मि-इति, तस्य बोधस्वातन्त्र्यस्वरूपस्य विभवस्य 'भासनं' प्रकाशः 'सर्वो ममायं विभवः' इति बाह्यतया अभिमतस्य सर्वस्य स्वात्मन्येव स्वीकारः, तस्य 'योगः' एवं-परिशीलनक्रमेण आत्मनि यत् विमर्शदार्ढ्यम्, एवम् एतेन 'स्वज्ञानविभवभासनयोगेन, निजम् आत्मानं' न अन्यत उपनतं चैतन्यस्वभावम् 'उद्वेष्टयते' देह-प्राण-पुर्यष्टक-शून्यपरामर्शनानिगडैः यो वेष्टित आसीत्,

पं० १२ ग० पु० स्वात्मन्येव क्रोडीकार इति पाठः ।
पं० १७ ग० पु० परामर्शनिगडैः इति पाठः ।



तमेव 'चैतन्यस्वरूपः स्वतन्त्रोऽस्मि' इति विमर्शनेन पुनरपि भगवानेव उद्वेष्टनं विगतवेष्टनं कुरुते-इति। एवम् अख्यातिबलात् आगतं स्वात्मनो देहाद्यावरणं, तत् पुनरपि ख्यातिबलात् विनश्यति,-इति स्वविकल्पकल्पित इयान् दोषः,-इति श्रीमद्ग्रन्थकृता तन्त्रसारे निरूपितम्

'यो निश्चयः पशुजनस्य जडोऽस्मि कर्म-
संपाशितोऽस्मि मलिनोऽस्मि परेरितोऽस्मि ।
इत्येतदन्यदृढनिश्चयलाभयुक्त्या
सद्यः पतिर्भवति विश्ववपुश्चिदात्मा ॥'

इति। किमिति बध्नाति मुञ्चति च भगवान्?-इत्याह 'इति बन्ध' इत्यादि । 'इति' प्राक् प्रतिपादितेन क्रमेण भगवान् स्वतन्त्रः-'परमशिवः'-पूर्णचिदानन्दैकघनलक्षणः-स्वरूपगोपनसतत्त्वक्रीडाशीलत्वात् अख्यात्यवभासनपूर्वं स्वात्मानमेव देहादिप्रमातृतापन्नं विधाय,

पं० ६ घ० पु० संपादितोऽस्मीति पाठः ।
पं० १० ग० घ० पु० लाभसिद्ध्या इति पाठः ।

स्वरूपं प्रच्छाद्य च बन्धं विद्धाति; तथैव पुनः स्वेच्छातः स्वात्मज्ञानप्रकाशक्रमेण, देहादिप्रमातृताबन्धं निवार्य, स एव तं स्वात्मानं मोचयति;–इति उभयथा 'बन्धमोक्षचित्रां' संसारापवर्गस्वरूपाश्चर्यमयीं 'क्रीडां'–खेलां 'प्रतनोति'–विस्तारयति 'एकाकी न रमाम्यहम्' इति । स्वभाव एव एष देवस्य, यत् तां तामपि अवस्थाम् आपन्नः स्वरूपरूपः सन् सर्वत्र अनुभवितृतया प्रथते,–इत्येतदेव स्वातन्त्र्यम् ॥ ३३ ॥

न केवलमेतत्, यावत् अपरः कश्चित् अवस्थाविशेषः स्वस्मिन् रूपे विश्रान्त एव, अवभास्यते भगवता–इत्याह

सृष्टि स्थिति-संहारा
जाग्रत्स्वप्नौ सुषुप्तमिति तस्मिन् ।
भान्ति तुरीये धामनि
तथापि तैर्नावृतं भाति ॥ ३४ ॥

पं० ११ क० पु० केवलमेतावत्, अपर इति पाठः ।
पं० १२ ख० पु० आभास्यते इति पाठः ।



विश्वापेक्षया ये सर्गादयो, मायाप्रमातृगताश्च ये जाग्रदादयोऽवस्थाविशेषाः, ते उभयथा एतस्मिन् भगवति आनन्दघने 'तुरीये धामनि' चतुर्थे पूर्णाहन्तामये पदे 'भान्ति' तद्विश्रान्ताः सन्तः स्वरूपसत्तां कल्पितप्रमात्रपेक्षया बाह्यतया लभन्ते । परमेश्वराभित्तौ यत् न प्रकाशते तत् बाह्यतयापि न प्रकाशते, अतः

'त्रिषु चतुर्थं तैलवदासेच्यम् ।'(३ । २० शि० सू०)

इति सर्वासु अवस्थासु तुरीयं रूपम् अनुस्यूतत्वेन स्थितम्,–इति परमार्थः । एतावता तत्र तैः स्वरूपम् आच्छादितं स्यात् न वा?–इत्याह 'तथापि तैर्नावृतं भाति' इति । इत्थमपि तैः स्वरूपसत्तार्थम् आवृतमपि तेभ्यः समुत्तीर्णतया सर्वानुभवितृतया सर्वत्र अवभासत एव, न पुनः तदावरणेन पूर्णस्वरूपतां तत्र तिरोधत्ते;–इति शिवधाम सर्वावस्थास्वपि सदैव परिपूर्णम् ॥ ३४ ॥

वेदान्तभाषाभिर्जाग्रदादीनां त्रयाणां स्वरूपं व्यवहरन्, तदनुस्यूतमपि ततः परं तुरीयम् आवेदयति

जाग्रद्विश्वं भेदात्
स्वप्नस्तेजः प्रकाशमाहात्म्यात् ।
प्राज्ञः सुप्तावस्था
ज्ञानघनत्वात्ततः परं तुर्यम् ॥३५॥

जाग्रदवस्थैव 'विश्वं' ब्रह्मणो वैराजं स्वरूपं, कुतः? 'भेदात्' शब्दादिविषयपञ्चकस्य बाह्यतया परमेश्वरसृष्टस्यैव सर्वप्रमातॄणां चक्षुरादीन्द्रियप्रवृत्तेः,--इति एकस्यैव ब्रह्मणो विषयविषयिभावेन स्थितस्य नाना इन्द्रियज्ञानवैचित्र्यम्। अत एव शिवसूत्रेषु

'ज्ञानं जाग्रत्।' (१।८)

इति। एषा ब्रह्मणो विराडवस्था गीयते। यच्छ्रुतिः

पं० २ घ० पु० प्रकाशसामर्थ्यात् इति पाठः।

पं० ६ ख० पु० सुपुप्तावस्था इति, ग० पु० स्वापावस्था इति पाठः



'यो विश्वचक्षुरुत विश्वतो मुखो
विश्वतो हस्त उत विश्वतस्पात् ।
संबाहुभ्यां नमते संयजत्रै-
र्द्यावापृथिवी जनयन्देव एकः ॥'

इति। तथा 'स्वप्नः' तेजोऽवस्था ब्रह्मणः। कुतः?–इत्याह 'प्रकाशमाहात्म्यात्' इति। स्वप्ने बहिष्करणानि शब्दादौ विषये तावत् न प्रगल्भन्ते, नापि तत्र बाह्यं शब्दादिकं नाम किंचित् परमार्थसत् विद्यते, नापि बाह्यतया अध्यवसायस्य अविद्यादि किंचित् भिन्नम् अभिन्नं वा कारणान्तरम् उपलभ्यते, युक्त्या विचार्यमाणं वा उपपद्यते, अथ च स्वप्ने सर्वं प्रकाशते; अत इदम् अर्थबलात् आयातम्–यत् स एव भगवान् स्वस्वभावो देवः तत्तत्प्रमातृतां समाविष्टः स्वप्नायमानः- स्वात्मानमेव प्रकाशस्वातन्त्र्यात् गृह-नगराट्टालादि-अनेकप्रमातृवैचित्र्यरूपतया प्रविभज्य प्रतिप्रमातृ स्वप्ने असाधारणमेव विश्वं प्रकाशयत्येव,–इति ब्रह्मणः

पं० १४ ग० घ० पु० ब्रह्मस्वभाव इति पाठः।

स्वातन्त्र्यं स्वप्न एव ब्रह्मवादिभिः अभ्युपगतम्। यतो वेदान्तेषु इदमुक्तम्

'प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान्।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रकाशते ॥'

इति प्रकाशमाहात्म्यमेव अत्र हेतुः, अतः स्वप्नो ब्रह्मणः तेजोऽवस्था–इति। तथा 'प्राज्ञः सुप्तावस्था' इति। सर्वप्रमातृणां या 'सुप्तावस्था' सुषुप्तं सा 'प्राज्ञः' इति ब्रह्मणः प्राज्ञावस्था–इति। यतः सर्वप्रमातृणां ग्राह्य-ग्राहकप्रपञ्चविलयात् महाशून्यत्वरूपे ग्राह्यादिविलये, संस्कारशेषे सुषुप्ते विश्वस्य बीजभूतस्य ब्रह्मण एव प्रज्ञा, ब्रह्म प्रज्ञातृतया अन्तरतमम् अवशिष्यते,–इति यावत्। सर्वस्य प्रमातुः नीलसुखादिविश्ववैचित्र्यप्रथायाः सैषा संस्कारभूमिः, ततः प्रबुद्धस्य प्रागनुभूतवत् व्यवहारदर्शनात्; अन्यथा यदि अस्यां भूमौ स्थिरं प्रज्ञातृस्वभावं सर्वकोडीकारेण ब्रह्म न प्राकाशिष्यत, कुतः तत उत्थित-

पं० ११ क० पु० विश्वबीजस्येति, ग० पु० विश्वबीजभूतब्रह्मण इति, घ० पु० विश्वस्य बीजस्येति पाठः।
पं० १२ ख० पु० प्रज्ञानं ब्रह्म प्रज्ञानतया तुरीयमवशिष्यते इति पाठः।
पं० १३ घ० पु० नीलसुखादि वैचित्र्यप्रथायाम् एषा इति पाठः।
पं० १७ क० पु० ब्रह्मणो न प्रकाशिष्यते इति, घ० पु० ब्रह्मणा न प्रकाशिष्यते इति पाठः।



स्य प्रमातुः प्रागनुभूतवस्तुनः 'तथैव तत्' इति अनुभूतचरत्वेन स्मृतिरुदपत्स्यत; नापि 'सुखम् अहम् अस्वाप्सम्, दुःखम् अहम् अस्वाप्सम्, गाढमूढोऽहम् आसम्' इति अनुभवः प्रादुरभविष्यत्–इति। तथा च भट्टदिवाकरवत्सः

'सर्वेऽनुभूता यदि नान्तरर्था-
स्त्वदात्मसात्कारसुरक्षिताः स्युः।
विज्ञातवस्त्वप्रतिमोषरूपा
काचित् स्मृतिर्नाम न संभवेत्तत् ॥'

इति। इत्थं सुषुप्तं चिन्मयमेव ब्रह्मणः प्राज्ञावस्था,–इति गीयते। कुतः? 'ज्ञानघनत्वात्' इति। सुषुप्ततुर्ययोः साधारणोऽयं हेतुः,–इति उभयत्र योज्यम्। एषा सुषुप्तभूमिः 'ज्ञानघना' प्रकाशमूर्तिः, केवलं विश्वप्रलयसंस्कारेण ध्यामलां[७] सती शुद्धचिन्मयी न भवति–इति। यदुक्तं स्पन्दशास्त्रे

'ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः।
पदद्वये विभुर्भाति तदन्यत्र तु चिन्मयः ॥',
(१ नि० १८ का०)

७ ध्यामलां अस्फुटा इत्यर्थः।

पं० ६ ख० पु० ननातरस्था इति पाठः।
पं० ७ क० ख० घ० पु० आत्मसंस्कारेति पाठः।
पं० १४ क० घ० पु० श्यामलेति पाठः।

इति । तथा ‘ ततः परं तुर्यम् ’ इति । तस्मात् सुषुप्तात् ‘ परम् ’ अन्यत् निःशेषपाशववासनासंस्कारपरिक्षयात् शुद्धपूर्णानन्दमयं ब्रह्मणः तुरीयं रूपम् अनुगुणं नाम । यत् अत्र नाम अन्वर्थं न किंचित् उपपद्यते, अतो व्याख्यातस्य अवस्थात्रयस्य विश्रामभूतं सर्वान्तरतमत्वेन अनुस्यूतम्,–इति चतुःसंख्यापूरणेन ‘तुर्यम्’ इति पूरणप्रत्ययेन संख्याव्यपदेशोऽत्र कृतः कथम् अवस्थात्रयस्य अनुस्यूतमपि, ततः परम् एतत्?–इत्याह ‘ज्ञानघनत्वात्’ इति । यतो जाग्रदादयोऽवस्थाः सर्वा भेदप्रवणत्वात् प्रमातॄणाम् अज्ञानमय्यः, तुरीयं ग्राह्य-ग्राहकक्षोभप्रलयसंस्कारपरिक्षयात् ज्ञानघनप्रकाशानन्दमूर्ति; अतः तदन्तःस्थमपि ताभ्योऽवस्थाभ्यः चिन्मयतया समुत्तीर्णत्वात् ‘परम्’ अन्यत्–इति । एवम् अवस्थाविचित्रं परमाद्वयस्वभावं स्वतन्त्रं ब्रह्मैव पूर्णं विजृम्भते ॥ ३५ ॥

एवमपि शुद्धस्य परमात्मनः सर्वप्रमात्रनु-

पं० ४ क० पु० अनुसार्थकगुणां नामेति, ख० पु० अनुगुणं नाम सार्थकं यदत्र सान्वर्थमिति, घ० पु० यदात्र नाम इति पाठः ।



स्यूतत्वेन स्थितत्वात् अवश्यं प्रमातृगणगतम् अख्यातिमालिन्यम् आयाति,–इति यत्, तत् न,–इति दृष्टान्तेन आवेदयति

जलधर-धूम-रजोभि-
र्मलिनीक्रियते यथा न गगनतलम् ।
तद्वन्मायाविकृतिभि-
रपरामृष्टः परः पुरुषः ॥ ३६ ॥

‘यथा’ मेघ-धूम-धूलीपुञ्जैः आकाशस्थैरपि आकाशपृष्ठम् अमलिनं स्वभावतो न मलिनं विधीयते, नापि नित्यतावैतत्यखण्डनां वा नीयते, केवलं दर्पणप्रतिबिम्बवत् तत्तदवस्थाविचित्रं गगनं गगनमेव, सर्वदा तथात्वेन प्रत्यभिज्ञानात् । ‘तद्वत्’ इति तथैव ‘मायाविकृतिभिः’ अख्यातिसमुत्थैर्विकारैः नानाप्रमातृगतैर्जन्म-मरणाद्यनेकविचित्रावस्थामयैः भगवत्स्थैरपि भगवान् न ‘परामृष्टः’ न तैः अपहृतस्वरूपः; यतः स एव ‘परः पुरुषः’ इति सर्वपुरुषाणां जीवानाम् आद्य उल्लासो विश्रान्तिस्थानं च,–इति सर्वानु-

पं० १८ ग० पु० सर्वभवितृतया इति, घ० पु० सर्वत्रानुभवितृतया इति पाठः ।

भवितृतया सदा स्फुरति,—इति परशब्देन निर्दिष्टः। तस्मात् न स्वसमुत्थैः अप्रकाशरूपैः मायाविकारैः ऐन्द्रजालिकवत् भगवतः काचित् खण्डना—इति, परमेष्ठिना अजडप्रमातृसिद्धावपि उक्तम्

'यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते।
जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता॥
तदात्मनैव तस्य स्यात्कथं प्राणेन यन्त्रणा।'

इति॥ ३६॥

ननु एकचिन्मात्रपरमार्था अपि पुरुषा विशिष्टसुख-दुःख-मोह-जन्म-मरणादिनानावस्थावैचित्र्यभाजश्च,—इति कथम् एतत्?—इति दृष्टान्तम् आह

एकस्मिन् घटगगने
रजसा व्याप्ते भवन्ति नान्यानि।
मलिनानि तद्वदेते
जीवाः सुख-दुःखभेदजुषः॥३७॥

पं० २ ग० घ० पु० प्रकाशरूपैरिति पाठः।
पं० ४ परमेष्ठिना नरेश्वरविवेके इति आदर्शपुस्तकेषु पाठः।
पं० ६ क० पु० नियन्त्रिता इति पाठः।



यथा 'एकस्मिन्' कुम्भाकाशे धूलिपुञ्जसमाच्छादिते 'न अन्यानि' घटाकाशानि विमलान्यपि आकाशत्वाविशेषात् 'मलिनानि' रजसा आच्छादितानि 'भवन्ति'। विमलं व्यापकं नित्यमपि हि गगनं यादृशं घटसंकोचसंकुचितं भवेत्, तादृशमेव तस्यैव घटस्य तत् भवति, न पुनः सर्वाणि घटपटाद्याकाशानि कृष्णागुरुधूपितानि, मृगमदाधिवासितानि विठिरगन्धीनि वा एकाकाशस्वरूपत्वात् संकीर्यन्ते, स्वगतघटादिकृतविच्छेदात्; प्रत्युत एकत्रापि गगने वास्तवे स्थिते घटादयः स्वगतभित्तिसंकोचनियन्त्रिताः सन्तो नानागगनवैचित्र्यं प्रथयन्ति। इत्थं घटकृतः संकोच एव गगनतया तथा अवशिष्यते, तथात्वेन अर्थक्रियाकारित्वात्; न पुनः गगनस्य एतत् किंचित् घटगतं मालिन्यादि स्वरूपतिरोधानाय भवति, नापि परस्परं घटाद्यवच्छिन्नानां गगनानां व्यामिश्रणा—इति। 'तद्वत्' इति तथैव अमी 'जी-

पं० ६ क० पु० विविधगन्धीनीति पाठः।

वाः' पुरुषा एकचिन्मात्रपरमार्था अपि पारमेश्वर्या मायाशक्त्या आणव-मायीय-प्राकृतकोशत्रयावेष्टनेन पूर्णं व्यापि चिदानन्दैकघनं स्वरूपम् अपहस्त्य परिमितीकृताः, येन एकचैतन्यात्मानोऽपि स्वगतकोशत्रयविच्छेददौरात्म्यात् परस्परं भिन्नाश्च—इति, घटपटाद्याकाशवत्। इत्थं मायीयकोशकृतो विच्छेद एव जीवतया व्यवह्रियते, न पुनः परमेश्वरेऽनवच्छिन्नचिदानन्दैकघने जीवाः, पुरुषाः, आत्मानः, अणवः—इति दर्शनान्तरदृष्टः कश्चित् व्यवहारः। एवम् आणवादिकोशावच्छिन्ना जीवा अनादिविचित्रकर्ममलवासनाधिवासितनानादेहा नानाशया नानापुण्य-पाप-स्वर्ग-नरक-सुख-दुःख-जन्म-मरणादिद्वन्द्वभेदभाजश्च सन्तो न अन्योन्यं संकीर्यन्ते, यथा नानाद्रव्याधिवासितानि घटाद्यवच्छिन्नानि घटाकाशानि,—इति सूपपन्नम् 'एकचिन्मात्रपरमार्था अपि स्वविच्छेदात् अन्योन्यभेदजुषश्च' इति ॥ ३७ ॥

इत्थं जीवमण्डलगता अवस्थाविशेषा ये,

पं० ११ क० ग० घ० पु० 'अनादि' इति पदं नास्ति ।



ते केवलं भगवति उपचर्यन्ते, न पुनः तत्त्वतः तेऽत्र केचित्—इत्याह

शान्ते शान्त इवायं
हृष्टे हृष्टो विमोहवति मूढः ।
तत्त्वगणे सति भगवान्
न पुनः परमार्थतः स तथा ॥३८॥

'तत्त्वगणे' इन्द्रियवर्गे 'शान्ते' उपरते सति, तद्वतः परमात्मा 'शान्तो' नष्ट इव अभिमन्यते; एवं तस्मिन् 'हृष्टे' साह्लादे सति, स तथैव उपचर्यते; परं तमोमये मूढे मोहवान्—इति, यथा स्थावरयोनौ, 'न पुनः परमार्थतो' वस्तुवृत्तेन 'स' परमेश्वरः 'तथा' तेन प्रकारेण भवति । सर्वो हि जडभाग उत्पाद्यः संहार्यो वा भवति, न पुनः नित्ये भगवति बोधस्वभावे मायादिकञ्चुकगते विनाशोत्पत्ती स्याताम्,—इति भगवान् सदा समः ॥ ३८ ॥

समुत्पत्तिक्रमेण आगता भ्रान्तिः पुनः ज्ञप्तिक्रमेण सुतरां समुन्मूलिता भवति,—इत्यत्र स्वात्मन एव स्वातन्त्र्यम्—इत्याह,

यदनात्मन्यपि तद्रूपा-
वभासनं तत् पुरा निराकृत्य ।
आत्मन्यनात्मरूपां
भ्रान्तिं विदलयति परमात्मा
॥ ३९ ॥

'अनात्मनि' अचेतनलक्षणे देहादौ, 'कृशः स्थूलश्च अस्मि' इत्यादि यत् 'तद्रूपावभासनम्' अनात्मनि आत्मतया परामर्शनं, 'तत्' तस्मिन् 'पुरा' आदावेव 'निराकृत्य' 'अहं चिदानन्दैकघनोऽनवच्छिन्नस्वभावः स्वतन्त्रश्च' इति अकृत्रिमाहन्तास्फुरणया कृत्रिमदेहादिप्रमातृताम् अपहृत्य, आत्मैव विगलितदेहबन्धः परमात्मतां यातः सन् 'आत्मनि' अस्मिन् स्फुरद्रूपे विश्वपदार्थे प्रकाशवपुषि स्वाङ्गकल्पेऽपि या 'भ्रान्तिः' देहादिप्रमातृताभिमानजनिता भेदप्रथा, तां 'विदलयति' 'अहमेव एको विश्वात्म-

पं० ६ ग० पु० तिरस्कृत्येति पाठः ।
पं० ११ ख० ग० पु० स्फुरणसत्तया इति पाठः ।



ना स्फुरामि' इत्येवं चूर्णीकरोति । इदमत्र तात्पर्यम्,-यावत् अनात्मनि देहादौ आत्माभिमानो न गलितः, तावत् स्वात्मप्रथारूपेऽपि जगति भेदप्रथामोहो न विलीयते; अतश्च अनात्मनि आत्माभिमानभ्रमविनाशात्, आत्मनि अनात्माभिमानभ्रान्तिं परमात्मैव स्वात्ममहेश्वरो भगवानेव विनाशयति, न अन्यस्य अत्र सामर्थ्यम् ॥ ३९ ॥

एवं भ्रान्तिद्वयापसारणात् परमेश्वरीभूतस्य योगिनो न किंचित् कार्यम् अवशिष्यते—इत्याह

इत्थं विभ्रमयुगलक-
समूलविच्छेदने कृतार्थस्य ।
कर्तव्यान्तरकलना
न जातु परयोगिनो भवति ॥ ४० ॥

'इत्थं' कारिकार्धप्रतिपादितप्रकारेण भ्रान्तिद्वयस्य प्ररोहविदारणे 'कृतार्थस्य' स्वस्वात-

पं० १६ ग० घ० पु० प्रतिपादनप्रकारेणेति पाठः ।

न्त्रयस्य परिज्ञप्तेः अशेषसंकोचविदलनात् 'कृतः'– प्राप्तः 'अर्थः'– पुरुषार्थलाभो येन, तस्य–प्रकृष्टयोगयुक्तस्य न कदाचित् 'कर्तव्यान्तरस्य' तीर्थाटन-क्षेत्रपरिग्रह-दीक्षा-जप-ध्यान-व्याख्या-श्रवणादिरूपस्य कार्यशेषस्य 'कलना'– मनोव्यापारोऽपि न विद्यते,

'अयमेव परो धर्मो यद्योगेनात्मदर्शनम्।'

इति हि स्वात्मयोगस्य प्राधान्यम्; अतः तत्प्राप्त्या न अन्यत्र परिश्रमः पूर्णयोगिनः। यदुक्तम्

'यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च॥'
(२।५२)

इति गीतासु ॥ ४० ॥

संप्रति, पृथिव्यादिमायान्तस्य भेदावभासभाजो विश्वस्य भेदाभेदमयशाक्तभूमिकावेशे-

पं० २ ख० पु० परः पुरुषलाभ इति, घ० पु० परमार्थलाभ इति पाठः।
पं० ८ ख० पु० स्वार्थयोगस्येति पाठः।
पं० १४ क० ख० पु० भूमिकावशेनेति पाठः।



न पूर्णप्रकाशानन्दघनशांभवपदसमापत्त्या भेदविलायनेन तदभेदमयताप्राप्तिमभिधाय, ततः शांभवात् पदात् संपूर्णसुधाम्भोधिकल्पात् महाप्रवाहदेशीयशाक्तप्रसरोल्लासप्रमुखं तत्तत्तरङ्गभङ्गिरूपतामभिदधत्, स्वानुभवसिद्धं महामन्त्रवीर्यसारं समस्तभेदविलायनपरमाद्वयोदयं नर-शक्ति-शिवसामरस्यात्मकं परसंविद्धृदयं क्रमेण उन्मीलयिष्यन्, विश्वस्य आगमिकाण्डत्रयात्मतासंकलनयुक्त्या एकीकारं तावदाह

पृथिवी प्रकृतिर्माया
त्रितयमिदं वेद्यरूपतापतितम्।
अद्वैतभावनबलाद्
भवति हि सन्मात्रपरिशेषम्॥४१॥

पार्थिव-प्राकृत-मायीयाण्डात्मकं यत् स्थूल-सूक्ष्मपररूपं त्रिविधं 'वेद्यरूपतापतितं' ज्ञानगोचरतां प्राप्तं,

पं० ३ घ० पु० शांभवपदात् इति समस्तः पाठः।
पं० ४ क० पु० उल्लासप्रस्तुतसुखमिति पाठः।
पं० १४ ग० घ० पु० रूपतया पतितमिति पाठः।

'तत्तद्रूपतया ज्ञानं बहिरन्तः प्रकाशते ।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥
नहि ज्ञानादृते भावाः केनचिद्विषयीकृताः ।
ज्ञानं तदात्मतां यातमेतस्मादवसीयते ॥'

इति श्रीकालिकाक्रमोक्तन्यायेन यद् 'अद्वैतभावनं' तद्बलात्—तत्प्रकर्षात् 'सन्मात्रपरिशेषं' प्रकाशमानतात्मकसत्तामात्रात्मकं 'भवति'। 'हिः' यस्मादर्थे ॥ ४१ ॥

एतदेव भेदस्य अवास्तवत्वप्रतिपादनाभिप्रायेण उपपादयति

रशनाकुण्डलकटकं
भेदत्यागेन दृश्यते यथा हेम ।
तद्वद्भेदत्यागे
सन्मात्रं सर्वमाभाति ॥ ४२ ॥

यथा किल सौवर्णं रशनाद्याभरणं सुवर्णार्थिनो रशनाविशेषपरिहारेण हेममात्रतयैव आभाति, हेम-रजत-कांस्य-ताम्र-नागादि तावन्मात्रार्थिनो लोहरूपतया, 'तद्वत् सर्वम्' इ-

पं० १३ ख० पु० तावद्भेदत्यागे इति पाठः ।



दं त्यक्तहानादानादिविकल्पकलङ्कस्य अविकल्पप्रतिभासमात्रनिष्ठस्य योगिनो

'रूपादिषु परिणामात् तत्सिद्धिः ।'

इति भट्टश्रीकल्लटोक्तनीत्या 'भेदत्यागे' सति 'सन्मात्रं' सत्तामात्रात्मकम् 'आभाति' ॥ ४२ ॥

तदियतः सर्वस्य संकोचावभासपरित्यागात् आगमप्रसिद्धया नररूपस्य शाक्तरूपोपारोहं मन्त्रसंप्रदायं कटाक्षयन् अभिदधाति

तद्ब्रह्म परं शुद्धं
शान्तमभेदात्मकं समं सकलम् ।
अमृतं सत्यं शक्तौ
विश्राम्यति भास्वरूपायाम् ॥४३॥

'तत्'-एतत्-सत्तामात्रात्मकं सर्वं बृहत्त्वात् 'ब्रह्म' । यदाहुः श्रुत्यन्तविदः

'सदेवेदं सोम्य अग्र आसीत् ।'

इति पूर्णत्वात् 'परम्,' हेयोपादेयभावात् 'शु-

पं० १ क० पु० दानादिकलङ्कस्येति पाठः ।
पं० ७ क०पु० रूपोपारोहमात्रसंप्रदायेति, ग०घ०पु०मान्त्रसंप्रदायेति पाठः।

द्धम्', पृथक्त्वोपशमात् 'शान्तम्', अत एव 'अभेदात्मकम्', प्रकर्षापकर्षाभावात् 'समम्',

'प्रदेशोऽपि ब्रह्मणः सार्वरूप्यम-
नतिक्रान्तश्चाविकल्प्यश्च ।'

इति स्थित्या 'सकलम्', अत एव 'अमृतम्' अविनाशि,

'सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्थिताः ॥'

इति ।

'यदादौ च यदन्ते च यन्मध्ये तस्य सत्यता ।'

इति तत्रभवद्भर्तृहरिनिरूपितनीत्या 'सत्यं', तदेव सत्तामात्रात्मकम् एतत् सर्वं 'भास्वरूपायाम्' इच्छा-ज्ञान-क्रियारूपशक्तिसामरस्यात्मिकायां परस्यां शक्तौ विश्राम्यति

'संविन्निष्ठा विषयव्यवस्थितिः ।'

इति स्थित्या तन्मयीभवति इति ।

अथ च 'शान्तं' शकारस्यान्ते यन्मूर्धन्यरूपं, ततः परं यत् 'अमृतम्' अमृतबीजात्मकं



'ब्रह्म' सन्मात्रात्मकं सादाख्यपदस्पर्शात् 'शुद्धम्', अत एव 'अहम् इदं सर्वम्' इति सर्वसमरसीकरणात् 'समं सकलं' च, अतश्च अख्यातिगलनात् 'सत्यम्'। यदादिष्टं भगवता

'तृतीयं ब्रह्म सुश्रोणि .................. ।'

इति श्रीत्रिंशिकायाम् । तदिदम् अमृतीभावावमृष्टं सदाशिवपदोपारूढम् एतद्विश्वात्मकं ब्रह्म, प्रागुक्तायां शक्तौ विश्राम्यति ॥ ४३ ॥

क्रियाज्ञानेच्छामुखेन परशक्तौ यन्न विश्राम्यति तत् न किंचित्—इत्याह

इष्यत इति वेद्यत इति
संपाद्यत इति च भास्वरूपेण ।
अपरामृष्टं यदपि तु
नभःप्रसूनत्वमभ्येति ॥ ४४ ॥

यद् वस्तु वस्तुवृत्तेन बहिर्विद्यमानमपि, तद्यदि इच्छाज्ञानक्रियामुखेन भास्वरेण एतच्छक्तित्रयसामरस्यात्मकपराशक्तिस्फारमयेन बोधे-

पं० १३ ग० पु० सदपि तु इति पाठः ।
पं० १५ ग० घ० पु० वृत्तेन न बहिरिति पाठः ।

न 'न परामृष्टं' तत् प्रख्योपाख्याविकलं गगनपुष्पतुल्यम् । अनेन च सद्वृत्त्यूर्ध्ववर्तित्रिशूलात्मकवृत्तिवीर्यं सूचितम् ॥ ४४ ॥

एतच्छाक्तपदावेशमस्य अनुवदन् शांभवपदसमापत्त्या तन्मयीभावमाविर्भावयति

शक्तित्रिशूलपरिगम-
योगेन समस्तमपि परमेशे ।
शिवनामनि परमार्थे
विसृज्यते देवदेवेन ॥ ४५ ॥

तदित्थं 'समस्तमपि' एतत् सत्तामात्ररूपत्वात् प्रोक्तब्रह्मपरमार्थं, 'शक्तित्रिशूलपरिगमयोगेन'—निर्णीतयुक्त्या पराशक्तिसमापत्तिक्रमेण, 'शिवनामनि परमार्थे'—अनवच्छिन्नचिदानन्दैकघने परमेश्वरे स्वस्मिन् स्वभावे, 'विसृज्यते'—अन्तर्मुखविमर्शनप्रकर्षात् तत्समावेशे-

(८) प्रख्या ज्ञानम्, उपाख्या अभिवदनम्, अथवा स्वात्मनो ज्ञानविषयीभावप्राप्तीच्छा प्रख्या, परस्य ज्ञानविषयीभावप्रापणेच्छा उपाख्या, स्वात्मपरावभासविषयभावजिगामिषेत्यर्थः।



न-तन्मयीभावमापाद्यते, 'देवानां' ब्रह्मादिसदाशिवान्तानां, सर्वप्रकाशानाम् इन्द्रियाणां च 'देवेन' प्रभुणा परमशिवेनैव, नहि अत्र अन्यस्य कस्यचित् कर्तृत्वं घटते, नापि एतद्व्यतिरिक्तोऽन्यः कश्चित् प्रमातास्ति, अस्यैव च भगवतः तत्तद्भूमिकाधिरोहिणः तत्तद्रुद्र-क्षेत्रज्ञादिप्रमातृरूपतया स्फुरणम्,—इति 'देवदेवेन' इति युक्तैव उक्तिः। तदित्थं विसर्गवृत्तिर्दर्शिता ॥ ४५ ॥

एवम् इयता भेदात्मनो नररूपस्य जगतो, भेदाभेदात्मकशाक्तपदाध्यारोहेण अभिन्नचिद्घनशिवसामरस्यापत्तिमुपसंहारदृशा प्रदर्श्य, इदानीं चिदेकघनः शिव एव शक्तिरूपतया उल्लास्य नरात्मकविश्वरूपतया स्फुरति, न तु शिवव्यतिरिक्तं शक्तिनरयोः किमपि रूपं, शिव एव तु इत्थं निजरसाश्यानतया स्फुरति,—इति प्रसरयुक्तिं महामन्त्रस्फारमयीं दर्शयति



पुनरपि च पञ्चशक्ति-
प्रसरणक्रमेण बहिरपि तत् ।
अण्डत्रयं विचित्रं
सृष्टं बहिरात्मलाभेन ॥ ४६ ॥

चिदानन्देच्छाज्ञानक्रियाख्यशक्तिपञ्चकसामरस्यात्मा यः परमशिवः, तेन चिदादिशक्तिप्राधान्यप्रथनात्मकशिव-शक्ति-सदाशिवेश्वरशुद्धविद्याख्यभूमिकोन्मीलनयुक्त्या 'तत् अण्डत्रयं विचित्रम्' इति तत्तद्भुवनादिरूपं 'सृष्टं, बहिरात्मलाभेन' इति बाह्याभासात्मतया स्वात्मनः प्रदर्शनेन । 'पुनरपि' इत्यनेन एतत् दर्शयति – यत् परमशिव एव स्वतन्त्रः सदा स्वभित्तौ विश्वप्रपञ्चोल्लासनविलापनक्रीडां स्वात्मानतिरिक्तामपि अतिरिक्तामिव आदर्शयन् एवमित्थं स्थितो, न तु तद्व्यतिरिक्तं किमपि अस्ति इति ॥ ४६ ॥

इत्थं विश्वोल्लासनविलायनक्रीडाशीलो भ-

पं० १४ ख० पु० दर्शयन् इति पाठः ।



गवान् यः 'शिवः' इति व्यपदिश्यते, स कतमः कुत्र तिष्ठति, कतमेन वा प्रमाणेन प्रसिद्धः?—इत्याशङ्क्य सर्वेषां स्वात्मैव शिवः सर्वत्र आदिसिद्धतया स्फुरन् सर्गादीन् विदधाति,—इत्यस्मच्छब्दवाचकैः शब्दैः प्रतिपादयति

इति शक्तिचक्रयन्त्रं
क्रीडायोगेन वाहयन्देवः ।
अहमेव शुद्धरूपः
शक्तिमहाचक्रनायकपदस्थः ।४७।

मय्येव भाति विश्वं
दर्पण इव निर्मले घटादीनि ।
मत्तः प्रसरति सर्वं
स्वप्नविचित्रत्वमिव सुप्तात् ॥४८॥

अहमेव विश्वरूपः
करचरणादिस्वभाव इव देहः ।
सर्वस्मिन्नहमेव
स्फुरामि भावेषु भास्वरूपमिव ।४९।

पं० १२ ख० पु० प्रसरति विश्वमिति पाठः ।

द्रष्टा श्रोता घ्राता
देहेन्द्रियवर्जितोऽप्यकर्तापि ।
सिद्धान्तागमतर्कां-
श्चित्रानहमेव रचयामि ॥ ५० ॥

इति—व्याख्यातेन प्रकारेण, चिदादिशक्तिपञ्चकाक्षिप्तोऽनन्तो यः शक्तिसमूहः, तदेव 'यन्त्रं' क्रीडायोगेन वाहयन्' अरघट्टघटीयन्त्रन्यायेन सृष्ट्याद्युन्मज्जननिमज्जनहेलाक्रमेण विपरिवर्तयन्, अहमेव इति, 'देवः' सर्वप्राणिनाम् 'अहम्' इति, अनाहतो नादात्मा पराहन्ताचमत्कारसारः स्वात्मपरामर्शः, स एव सर्वस्य अनपह्नवनीयोऽयं स्वात्मैव 'देवः' क्रीडनशीलः स्फुरति इति। अनेन स्वस्वरूपनिष्ठ एव शिवः इति प्रतिपादितम्। तथा शुद्धरूपः—इति, कल्पनातिक्रान्तगोचरः। अन्यच्च 'शक्तीनां' करणदेवतानां विषयाहरणत्यागादिव्यवहारस्वातन्त्र्यदातृ यत् 'महाचक्रनायकपदं' तत्र तिष्ठति 'तत्स्थः'। यतः करणशक्तीनां चे-



तन्यविश्रान्तिं विना स्वरूपसत्ता न विद्यते, अतः शक्तिमन्तमेव स्वरूपासादनाय अनवरतं भजन्ते,—इत्यनेन सर्वप्रमातृहृदयाधिष्ठातृत्वात् भगवतो नियतभुवनाधिष्ठातृत्वं परिहृतम्। तथा यदिदं किंचित् विश्वतयाभिमतं, तत् सर्वम् आदर्शप्रतिबिम्बन्यायेन 'मय्येव भाति'—व्याख्यातरूपास्मदर्थविश्रान्तमेव अवभासते, अहन्तासारमेव स्फुरति इति यावत्। तथा 'मत्तः' इति—पूर्णात् अहम् इति-रूपात् स्वात्मनः, सकलं निःशेषमिदं विश्वं 'प्रसरति' प्रमात्रपेक्षया अपहृततया स्फुरति। कथम्?—इत्याह 'स्वप्नविचित्रत्वमिव सुप्तात्' इति, यथा निद्रितात् प्रमातुः स्वप्नावस्थायां बाह्यपदार्थाभावेऽपि पुर-प्राकार-देवगृहादि नानाश्चर्यं स्वप्नपदार्थवैचित्र्यम् अविद्यादिपरिकल्पितकारणान्तराभावात् स्वसंविदुपादानमेव प्रसरति, तथैव तीर्थान्तरनियमितकारणान्तरानुपपत्तेः अनवच्छिन्नचिदानन्दैकघनात् अहम् इति-रूपाद्विश्वम् इति। तथा 'अहमेव विश्वरूपः' इ-

त्यादि। अहम्, इत्येव यः पूर्णश्चैतन्यपरामर्शः, एष एव अस्मि नानादेहादिप्रमातृतासमापन्नो विश्वरूपः, आ-गोपालबालाङ्गनादिषु अन्तरभेदेन स्फुरणात् विश्वानि ममैव रूपाणि इति यावत्। क इव,? करचरणादिस्वभावो देह इव, यथा सामान्येन सर्वेषाम् एको देहः करचरणादिस्वभावः प्रतिप्रमातृ स्वालक्षण्येन नानारूपः, तथैव एकश्चैतन्यलक्षणः पदार्थः सर्वावासत्वात् विश्वरूपः इति। तथा 'सर्वस्मिन्'–प्रमातृप्रमाणप्रमेयरूपेऽस्मिन् 'अहमेव स्फुरामि' सर्वस्य स्वात्मानुभवितृत्वेन प्रकाशनात्। कथं? 'भावेषु भास्वरूपमिव' इति, यथा नानावस्तुषु 'भास्वरूपम्' अतिशयेन द्योतनशीलं वस्तु देदीप्यते, तथैव जडेऽस्मिन् जगति एकश्चिद्रूपोऽहम् इति। अतश्च 'द्रष्टा' इत्यादि,–'देहेन्द्रियवर्जितोऽपि' चिन्मूर्तत्वात् अहमेव पश्यामि, शृणोमि, जिघ्रामि, रसयामि, स्पृशामि–इति सर्वत्र पूर्णाहन्ताविश्रान्तेः कृतकृत्यता। देहेन्द्रियवर्गो हि 'पश्यामि'

पं० १६ क० पु० देहेन्द्रियवर्जितोपि पश्यामीत्यादि अभिमन्यते इति पाठः।



इत्यादि मन्यते, परं स्वापाद्यवस्थासु द्रष्टृत्वाद्यभावात्; तस्मात् देहेन्द्रियादिवर्गसमुल्लासकः तद्वर्जितोऽपि चिदानन्दैकघनः सर्वभूतहृदयान्तरचारी विषयोपभोगभोक्ता अस्मच्छब्दवाच्यः परः पुरुष एव। तथा च श्रुतिः

'अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम्॥' (श्वे० उ० ३। १६)

इति। तथा अकर्तापि सिद्धान्तागम इत्यादि, स्वयमविधातापि देव-मुनि-मनुष्याद्याशयाविष्टः संक्षेपविस्तारविवक्षया अन्तःप्रतिभास्वरूपः अहं सिद्धान्तादीन् नानाश्चर्यान् करोमि, न पुनः जडानां लोष्टस्थानीयानां देहेन्द्रियाणां तत्करणं शक्यम्,–इति तत्तद्वैविधानेन अहमेव सर्वप्रमाणनिर्भाता इति। अनेन पराहन्तास्वरूपस्य स्वात्ममहेश्वरस्य सत्तायां न प्रमाणोपयोग उपपद्यते उपयुज्यते वा–इत्युक्तं स्यात्। एवमनपह्नवनीयः 'अहम्' इत्येवम् अनुभवितृ-

पं० १७ क० ख० पु० प्रमाणोपभोग इति पाठः।

तया सर्वेषां स्वात्मैव शिवः सर्वत्र अवस्थितः, सर्वप्रमाणेषु आदिसिद्धः इति ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

तदेवं व्याख्यातेन क्रमेण 'सर्वो ममायं विभवः' इति दार्ढ्येन स्वात्मानं प्रत्यवमृशन् परब्रह्मस्वरूपो योगी भवति इत्याह

इत्थं द्वैतविकल्पे
गलिते प्रविलङ्घ्य मोहनीं मायाम् ।
सलिले सलिलं क्षीरे
क्षीरमिव ब्रह्मणि लयी स्यात् ॥५१॥

अनेन प्रकारेण सर्वाहंभावपरिशीलनयुक्त्या 'द्वैतविकल्पे गलिते'–भेदप्रथायां विलीनायां, 'मोहनीं मायां प्रविलङ्घ्य' अनात्मनि आत्माभिमानरूपाम् अख्यातिं भेदप्रथाहेतुम् 'अहमेव विश्वात्मा' इति संकोचापसरणेन समुत्सृज्य, ज्ञानी 'ब्रह्मणि' बृंहणात्मके पूर्णे चिदानन्दैकघने स्वरूपे 'लयी स्यात्' संकोचविलयाद् ब्र-

पं० ६ क० पु० ब्रह्मस्वरूपयोगो भवतीति पाठः ।



ह्मतादात्म्यं यायात् । किं यथा ?– इत्याह 'सलिले' इत्यादि । यथा 'सलिलम्' उद्धृतं नानाघटादिभिः जलं, क्षीरं वा, विविधशावलेय-बाहुलेयाद्यनेकगोसहस्रसंभिन्नं पुनरपि घटशावलेयादिकृतभेदसंकोचपरिक्षयात् 'सलिले सलिलं' प्रविष्टम् 'क्षीरे क्षीरं' वा–इत्येकमेव तद्वस्तु, न तत्र भेदः स्फुरति, तथैव देहप्राणपुर्यष्टकशून्यात्मकप्रत्यवमर्शभङ्गात् ब्रह्मैव संपद्यते । यथाह भट्टदिवाकरवत्सः

'जाते देहप्रत्ययद्वीपभङ्गे
प्राप्तैकध्ये निर्मले बोधसिन्धौ ।
अव्यावर्त्य त्विन्द्रियग्राममन्त-
र्विश्वात्मा त्वं नित्य एकोऽवभासि ॥'

इति कक्ष्यास्तोत्रे ॥ ५१ ॥

एवं ब्रह्मसत्तामधिरूढस्य योगिनो द्वन्द्वाभिभवोऽपि ब्रह्ममय एव न स्वरूपविप्रलोपाय प्रगल्भते–इत्याह

पं० २ क० ख० पु० यथा सरःसमुद्धृतं नानाघटादिभिः सलिलमिति पाठः ।
पं० ५ ग० पु० कृतसंकोचेति पाठः ।
पं० १२ क० पु० अव्यावर्त्यैवेन्द्रिय इति पाठः, ग० पु० अव्यावृत्यैव इति पाठः ।

इत्थं तत्त्वसमूहे
भावनया शिवमयत्वमभियाते ।
कः शोकः को मोहः
सर्वं ब्रह्मावलोकयतः ॥ ५२ ॥

एवं निर्णीतेन प्रकारेण गलितकञ्चुकबन्धस्य योगिनः 'तत्त्वसमूहे' भूतविषयेन्द्रियव्राते 'भावनया' सर्वमिदमेका स्वसंवित्–इति दृढप्रतिपत्त्या 'शिवमयत्वं' प्राप्ते–परमाद्वयरूपतां याते, शोकमोहोपलक्षिता द्वन्द्वाभिभवाः 'सर्वम्' इदं तत्त्वव्रातं 'ब्रह्म' पश्यतोऽस्य न केचनैव ते, ब्रह्ममयत्वात् सर्वे स्वरूपरूपा–इति न खेदाय प्रभवन्ति ॥ ५२ ॥

ननु परमाद्वयरूपस्यापि ज्ञानिनोऽवश्यं स्थिते शरीरेऽपि तद्धेतुकशुभाशुभकर्मफलसंचयः किमिति न स्यात्?–इति परिहरति

पं० २ ख० पु० शिवतत्त्वमिति पाठः।
पं० १४ ख० पु० तद्धर्मकेति पाठः।



कर्मफलं शुभमशुभं
मिथ्याज्ञानेन संगमादेव ।
विषमो हि सङ्गदोष-
स्तस्करयोगोऽप्यतस्करस्येव ॥५३॥

अश्वमेध-ब्रह्महननादिरूपपुण्यापुण्यकर्मफलप्रचयसंचयोऽपि 'मिथ्याज्ञानेन संगमादेव' प्रादुर्भवति,–अहं शरीरी, इदम् अश्वमेधादि मम उपायतया अस्तु–इति यदनात्मनि आत्माभिमानपूर्वम् आत्मनि अनात्माभिमानलक्षणं वैपरीत्येन ज्ञानं, तेन योऽभिष्वङ्गः, तस्मादेव पशोः शुभाशुभकर्मफलसंचयः, येन अनवरताधिवासितः संसारक्लेशभाजनं भवति। ननु ब्रह्मात्मकस्यापि प्रमातुः किमिति एतावता पशुत्वमायाति? – इत्यत्र अर्थान्तरमुपाक्षिपति 'विषमो हि' इत्यादि। यस्मात् 'सङ्गदोषः' सर्वथा अविषह्यः, यथा असाधुयोगोऽत्यन्तसाधो-

पं० ८ ख० पु० यदात्मन्यनात्माभिमानपूर्वमनात्मन्यात्माभिमानरूपमिति पाठः।

रपि स्वगतदोषसमर्पणं कुरुते, तथैव शुद्धस्यापि प्रमातुः अख्यातिजनितो मोहयोगः पशुत्वमापाद्य शुभाशुभकर्मसंबन्धं ददाति ॥ ५३ ॥

जन्ममरणाद्यपि न ब्रह्मरूपस्य योगिनः, अपि तु मायाप्रमातॄणामेव—इत्याह

लोकव्यवहारकृतां
य इहाविद्यामुपासते मूढाः ।
ते यान्ति जन्ममृत्यू
धर्माधर्मार्गलाबद्धाः ॥ ५४ ॥

ये प्रमातारो देहात्ममानिनो भूत्वा फलकामनाकलुषिता लोकाचाररूपां पुण्यापुण्यमयीम् 'अविद्यां' भेदप्रथारूपां मायां, जगति स्वर्गनरकादिफलप्राप्त्युपायत्वेन सेवन्ते, 'ते मूढाः'—अज्ञाः पुण्यापुण्यनिगडबद्धाः तत्फलोपभोगाय पुनः पुनः जायन्ते म्रियन्ते च,—इत्यनवरतसंसारक्लेशभाजो भवन्ति, न पुनः प्रक्षीणमोहावरणो-विगलितधर्माधर्मबन्धो-ब्रह्मस्वभावो योगी जा-



यते म्रियते वा—इति ॥ ५४ ॥

एवमविद्योपार्जितान्यपि कर्माणि ज्ञानाविर्भावादेव क्षीयन्ते, न अन्यथा—इत्याह

अज्ञानकालनिचितं
धर्माधर्मात्मकं तु कर्मापि ।
चिरसंचितमिव तूलं
नश्यति विज्ञानदीप्तिवशात् ॥ ५५ ॥

'अज्ञानकाले' कृत्रिमप्रमातृताभिमानावसरे पुण्यापुण्यरूपं 'कर्म' अनुगुणफलप्रार्थनया यत् 'निचितं'-स्वीकृतं, तत् 'विज्ञानदीप्तिवशात्'—विशिष्टज्ञानदीप्तिवशात् 'नश्यति' 'अहमेव परं ब्रह्म' इति कृत्रिमप्रमातृतादाहसमर्थं विज्ञानं, तस्य या पौनःपुन्येन प्रत्यवमर्शनात् प्रभा, तत्सामर्थ्यात् तत् अदर्शनं याति । किमिव?—इत्याह 'चिरसंचितं तूलमिव' यथा चिरसंचितं तूलं—हंसरोम वह्निप्रदीप्तिवशात् झटित्येव भस्मसात् याति, तथैव सर्वः कर्मफलप्रचयो विज्ञानवह्नि-

सामर्थ्यात् क्षणमध्ये प्रलयमुपगच्छति—इति । गीतासु

'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥'
(४।३७)

इति ॥ ५५ ॥

न केवलं प्राक्कृतं कर्म ज्ञानप्रसादात् उपलीयते, यावत् इदानीन्तनमपि कर्म ज्ञानेद्धया दृष्ट्या न फलोपभोगाय पर्यवस्यति—इत्याह

ज्ञानप्राप्तौ कृतमपि
न फलाय ततोऽस्य जन्म कथम् ।
गतजन्मबन्धयोगो
भाति शिवार्कः स्वदीधितिभिः ॥५६॥

आत्ममहेश्वरप्रत्यवमर्शप्ररूढौ 'कृतमपि' शुभाशुभादिकं 'कर्म' कृत्रिमप्रमातृताभिमानाभावात् न अनुगुणफलदानाय प्रगल्भते,—इति कर्मफलाभावात् तदुपभोगयोग्यस्य जन्मनः



केन प्रकारेण सत्ता स्यात्, न भवेत् योगिनः पुनर्जन्म—इत्यर्थः । ननु स पिण्डपातात् पुनर्न जायते चेत्, तर्हि कीदृशः स्यात्?—इत्याह 'गतजन्म' इत्यादि । गतो-जन्मरूपस्य बन्धस्य योगः संबन्धो यस्य, स एवम्—इति, प्रक्षीणमोहावरणः 'स्वदीधितिभिः'—चिन्मरीचिनिचयैः स 'शिवरूपोऽर्कः भाति'—स्फुरति, न पुनः तीर्थान्तरपरिकल्पितोऽस्य मोक्षः[१]—कुत्रचित् प्राप्तिः,—इति केवलं मायादिकञ्चुककृतसंकोचविनाशात् स्वशक्तिविकस्वरताम् आपद्यते—इति ॥ ५६ ॥

अत्रैव युक्तिमाह

तुष-कम्बुक-किंशारुक-
मुक्तं बीजं यथाङ्कुरं कुरुते ।
नैव तथाणवमाया-
कर्मविमुक्तो भवाङ्कुरं ह्यात्मा ॥५७॥

(१) मीमांसकानां स्वर्गादिलोकावाप्तेरेव मोक्षस्याभिमननादिति भावः।

पं० १४ क० ख० पु० तथा मलमाया इति पाठः ।

'यथा किंशारुकतुषकम्बुकेभ्यः' पृथक्कृतं शालिबीजं बीजस्वभावकिंशारुकादिसामग्र्यभावात् क्षितिजलातपमध्यवर्त्यपि 'नैव' अङ्कुरजननलक्षणकार्ये हेतुर्भवति, 'तथैव' कम्बुकस्थानीयेन 'आणवेन' मलेन, तुषस्थानीयेन मायामलेन, किंशारुकस्थानीयेन कार्ममलेन च 'मुक्तः' पृथग्भूतः 'आत्मा' चैतन्यं मलत्रयरूपसामग्र्यभावात् न पुनः 'भवाङ्कुरं' संसारप्ररोहं विदधाति, केवलं विश्वगतनानापदार्थसार्थप्रादुर्भावविनाशवैचित्र्यं स्वात्मनि परामृशन् महेश्वर एव भवति ॥ ५७ ॥

एवं ज्ञानाग्निदग्धकञ्चुकबीजस्य ज्ञानिनो न किंचित् शङ्कास्थानं हेयोपादेयं वा—इति अत आह

आत्मज्ञो न कुतश्चन
 विभेति सर्वं हि तस्य निजरूपम्।
नैव च शोचति यस्मात्
 परमार्थे नाशिता नास्ति ॥ ५८ ॥

पं० ३ क० ख० पु० मध्यवर्त्यपि बीजं नैवेति पाठः।



यः 'आत्मज्ञः' स्वात्ममहेश्वरस्वातन्त्र्यवित्, स 'न कुतश्चन बिभेति' न स कस्मादपि राज्ञः शत्रोः प्राणिभ्यो वा भयमादत्ते। कुत एतत्?—इत्याह 'सर्वं हि तस्य निजरूपम्' इति, यतः 'तस्य' स्वात्ममहेश्वराद्वयवेदिनः 'सर्वं' पदार्थजातमिदं विश्वं 'निजस्य' स्वात्मनो महाप्रकाशैकवपुष एव 'रूपम्' आकारः, सर्वत्र प्रकाशानुगमात्,—इति प्रकाश एव स्वातन्त्र्यात् स्वपरात्मना प्रकाशते; अत एव भयस्थानं लोके यत् किंचित् प्रतिभाति तत् तस्य तथैव स्वाङ्गकल्पमेव कथं भयजनकं स्यात्; यदुत स्वात्मनो व्यतिरिक्तः पदार्थो भयहेतुर्भवेत्, कः पुनः सर्वतः परिपूर्णस्य अवधिभूतो भिन्नो यमादिरस्ति, यस्मात् ज्ञानी अपहस्तितदेहात्ममानित्वोऽपि बिभियात्,—इति सर्वत्र

पं० ५ क० ख० पु० महेश्वराद्वयवादिन इति पाठः।
पं० ७ क० पु० एकरूपमिति पाठः।
पं० ११ क० ख० पु० तदैवेति पाठः।
पं० १५ क० पु० देहात्मनित्योऽपीति पाठः।

निजरूपोपलब्धेः संसारास्थितोऽपि एकको विगलितस्वपरविभागतया निःशङ्कं विचरत्येव। यथोक्तं परमेष्ठिपादैः

'योऽविकल्पमिदमर्थमण्डलं
पश्यतीश निखिलं भवद्वपुः।
स्वात्ममात्रपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतो भयम् ॥'
(उत्पलस्तोत्रावल्यां १३ स्तो० १६ श्लो०)

इति। ग्रन्थकारोऽपि

'एकोऽहमिति संसृतौ जन-
स्त्राससाहसरसेन खिद्यते।
एककोऽहमिति कोऽपरोऽस्ति मे
इत्थमस्मि गतभीर्व्यवस्थितः ॥'

इति। अन्यच्च 'नैव च शोचति' इत्यादि। नापि आत्मज्ञः 'शोचति' यथा—धनदारादिकं मम नष्टं, रिक्तोऽस्मि, व्याधिनाक्रान्तोऽहं म्रियेवा—इत्यादि, यतो व्याख्यातेन क्रमेण 'परमार्थे' तात्त्विके वस्तुनि चैतन्यरूपे अन्तर्मुखे प्रमातृ-

पं० ६ स्वात्मपक्षेति मूलग्रन्थस्थः पाठः।



मात्रे 'नाशिता'-क्षयधर्मित्वं न विद्यते। सर्वं हि अभिमानसारं, कार्यत्वेन प्रतिभासमानम्, इदन्तावच्छिन्नम्, उत्पद्यते, क्षीयते च, न पुनः संविन्मयस्य आत्मनोऽहन्तासारस्य अकृत्रिमस्य स्वतन्त्रस्य,—कार्योन्मुखप्रयत्नानुपलब्धेः। न च एतावता स्वरूपविप्रलोपः स्यात्—इति विमृशतो योगिनो देहस्थस्यापि तद्धेतुकः शोकाद्याविर्भावः स्वरूपाच्छादकत्वेन न भवेत् इति ॥ ५८ ॥

नापि स्वात्ममहेश्वरस्वरूपपरिशीलनदार्ढ्यात् अस्य ज्ञानिनश्चेतसि अपूर्णत्वादिदोषः स्यात्—इति प्रतिपादयति

अतिगूढहृदयगञ्ज-
प्ररूढपरमार्थरत्नसंचयतः।
अहमेवेति महेश्वर-
भावे का दुर्गतिः कस्य ॥ ५९ ॥

'अतिगूढम्' अतिशयेन गुप्तं 'हृदयमेव गञ्जं' सर्वपरमार्थस्वस्वरूपविश्रान्तिस्थानस्व-

भावं भाण्डागारं, तत्र योऽतितीव्रतमसमाश्वासप्ररूढः 'परमार्थः' सद्गुरूपदिष्टः स्वात्मज्ञानसतत्त्वः स एव सर्वविभूतिहेतुत्वात् रत्नसंचय इव 'रत्नसंचयः' तेन हेतुना, 'अहमेवेति' सर्वमिदम् अस्मि—इति यः आविर्भूतः पूर्णः पराहन्ताविश्रान्तिलक्षणो 'महेश्वरभावः' शरीरिणोऽपि स्वात्मप्रकाशस्वातन्त्र्यं, तस्मिन् स्थिते सति 'का' नाम वराकी 'दुर्गतिः' दरिद्रभावः, तदुपलक्षितो वा कश्चित् कृत्रिमो विभूत्याद्यतिशयः स्यात्। आभाससारा हि सर्वे पदार्था यदैव आभासन्ते, तदैव योगिनः स्वात्मकल्पाः सन्तः कथम् उत्कर्षापकर्षादौ प्रगल्भन्ते—इति न किंचित् दौर्गत्यादिकं भवेत्। कस्य वा, इति को वा अस्या दुर्गतेः समाश्रयः, देहाद्यात्माभिमानिनो हि अस्या दुर्गतेः समाश्रया भवन्तु, यतस्ते व्यतिरिक्तस्य एषणीयस्य प्राप्त्या ईश्वराः,

पं० १० ख० पु० आभासमानसारा इति पाठः।

पं० १३ ग० घ० पु० को वा स्यात् दुर्गतेरिति पाठः।



तदपहाराद्रिक्ताः—इति। यः पुनः अकृत्रिमाहन्ताप्रत्यवमर्शपरमार्थो ज्ञानी 'सर्वमस्मि' इति अव्यतिरिक्तेन एषणीयेन महेश्वरः, स कथं व्यतिरिक्तप्राप्त्यप्राप्त्यभावात् दौर्गत्यादेर्भाजनं स्यात् ?, अत एव गञ्जशब्दस्य रत्नसंचयशब्दस्य ईश्वरशब्दस्य च हृदयप्ररूढपरमार्थो महान्,—इति अकृत्रिमार्थवाचकानि विशेषणानि उपपादितानि ॥ ५९ ॥

इदानीं मोक्षस्वरूपमाह

मोक्षस्य नैव किंचिद्
धामास्ति न चापि गमनमन्यत्र।
अज्ञानग्रन्थिभिदा
स्वशक्त्यभिव्यक्तता मोक्षः ॥६०॥

'मोक्षस्य' पराहन्ताचमत्कारसारस्य कैव-

पं० १ ख० पु० तदपहानादिति पाठः।

पं० ६ क० पु० परमार्थमहान् इति पाठः।

पं० ७ क० इत्थं कृत्रिमार्थेति पाठः।

पं० १३ क० ख० ग० पु० स्वशक्तिभिर्व्यक्ततेति पाठः।

ल्यस्य 'धाम' व्यतिरिक्तं स्थानं न विद्यत एव, देशकालाकारावच्छेदाभावात्; अत एव 'न चापि अन्यत्र' कुत्रचित् व्यतिरिक्ते 'गमनं' लयो मोक्षः, यथा भेदवादिनां मतेन उत्क्रान्त्या-चक्राधारादिभेदनात् ऊर्ध्वं द्वादशान्ते लयः—एषैव मुक्तिः—इति। यदुक्तम्

'व्यापिन्यां शिवसत्तायामुत्क्रान्त्या किं प्रयोजनम्।
अव्यापिनि परे तत्त्वे ह्युत्क्रान्त्या किं प्रयोजनम्॥'

इति। एवं-विधा अपि अन्ये तीर्थान्तरपरिकल्पिता बहवो मोक्षभेदाः सन्ति, ते प्रतन्यमाना ग्रन्थगौरवभयम् आनयन्ति,—इति नेह प्रतन्यन्ते—इति सर्वत्र द्वैतमलस्य संभवात् अमोक्षे मोक्षलिप्सा मोक्षाभास एव। किं पुनः मोक्षलक्षणम्?—इत्याह 'अज्ञान' इत्यादि। 'अज्ञानम्' अख्यातिजनितः आत्मनि अनात्माभिमानपूर्वोऽनात्मनि-देहादौ आत्माभिमानलक्षणो मोहः, स एव पूर्णस्वरूपसंकोचदायित्वात् ग्रन्थिरिव 'ग्रन्थिः' स्वस्वातन्त्र्यलक्षणस्य निजस्य व्यापि-



त्वादेः देहाद्यभिमानतया बन्धः, तस्य 'भित्' भेदनं निजपूर्णस्वात्मस्वातन्त्र्यपरिशीलनदार्ढ्यात् देहाद्यभिमानलक्षणस्य ग्रन्थेर्विदारणं, तेन हेतुना 'स्वशक्तिभिः' स्वात्मस्वातन्त्र्यलक्षणैः धर्मैः 'अभिव्यक्तता' स्वात्मशक्तिविकस्वरता, एष एव निरतिशयो 'मोक्षः' इति। अयमाशयः—यथा सहजनित्यव्यापकत्वादिधर्मयुक्तम् आकाशमपि घटादिभित्तिबन्धसंकुचितम्, तत एव तदेव अव्यापकत्वादिधर्मयुक्तं घटाकाशम्—इत्युच्यते आकाशाद्भिन्नमिव प्रथते, पुनरपि घटादिभित्तिकृतसंकोचभङ्गात् तदेव घटाद्याकाशं तदैव व्यापकत्वादिधर्मयुक्तं स्यात्, न पुनः तस्य घटादिभङ्गात् नूतनः कश्चिद्धर्माविर्भाव आयाति—इति। तथैव देहाद्यभिमानकृतसंकोचसंकुचितं चैतन्यं बद्धमिव—इत्युच्यते, तदेव पुनः स्वस्वरूपज्ञानाभिव्यक्तेः देहादिप्रमातृताबन्धसंक्षयात् स्वशक्तिविवेकविकस्वरं

पं० ५ क० ख० ग० पु० धर्मैर्व्यक्ततेति पाठः।
पं० १७ घ० पु० स्वशक्तिविकस्वरम् इति पाठः।

मुक्तमिव,–इति अभिमानमात्रसारौ परिमितप्रमात्रपेक्षया बन्धमोक्षौ, न पुनः परमार्थे संवित्तत्त्वे एवं किंचित् संभवति–इति। तस्मात् मुक्तौ नूतनं न किंचित् साध्यते, निजमेव स्वरूपं प्रथते। एतदेव विष्णुधर्मेष्वपि उक्तम्

'यथोदपानकरणात्क्रियते न जलाम्बरम्।
सदेव नीयते व्यक्तिमसतः संभवः कुतः॥
भिन्ने दृतौ यथा वायुर्नैवान्यः सह वायुना।
क्षीणपुण्याघबन्धस्तु तथात्मा ब्रह्मणा सह॥'

इति॥ ६०॥

एवं प्रक्षीणाज्ञानबन्धो ज्ञानी परानुग्रहार्थं शरीरमपि धारयन् मुक्तः–इति आवेदयति

भिन्नाज्ञानग्रन्थि-
गतसंदेहः पराकृतभ्रान्तिः।
प्रक्षीणपुण्यपापो
विग्रहयोगेऽप्यसौ मुक्तः॥ ६१॥

शरीरसंबन्धेऽपि स्वात्मज्ञानवित् शरीराद्य-



भिमानाभावात् जीवन्नपि 'मुक्तो' विकस्वरशक्तिर्भवेत्। ननु विग्रहयोग एव बन्धः, कथं तत्संबन्धेऽपि असौ मुक्तः स्यात्?–इत्याह 'भिन्न' इत्यादि। भिन्नो विदारितः अज्ञानरूपो ग्रन्थिः अपूर्णत्वख्यातिसमुत्थो देहाद्यभिमानरूपो बन्धो येन स एवं। तथा 'गतसंदेहः' इति अत एव नष्टसंशयः। 'पराकृता' न्यक्कृता परमाद्वयज्ञानलाभात् 'भ्रान्तिः' द्वयरूपो भ्रमो येन स तथा–इति। एवं परिशीलनेन प्रक्षीणानि पुण्यापुण्यानि विगलितसंस्काराणि देहात्ममानित्वाभावात् धर्माधर्माणि यस्य स एवं-विधः,–इति। अनेन 'अज्ञानमेव बन्धः' इति प्रतिपादितम्। तच्च विग्रहयोगेऽपि यस्य प्रक्षीणं स तदैव जीवन्नेव मुक्तो, न पुनः शरीरयोगो बन्धः, तदपगमो मुक्तिः–इति, किं तु देहपातात् पूर्णो मोक्ष इति॥ ६१॥

जीवन्मुक्तस्य कर्महेतौ–शरीरे स्थितेऽपि शरीरयात्रामात्रार्थं ज्ञानेद्धं कुर्वाणस्य कर्म न

फलाय तस्य भवति—इत्यत्र उपपत्तिमाह

> अग्न्यभिदग्धं बीजं
> यथा प्ररोहासमर्थतामेति ।
> ज्ञानाग्निदग्धमेवं
> कर्म न जन्मप्रदं भवति ॥ ६२ ॥

वह्निनिर्भृष्टं शालिबीजं क्षितिसलिलातपमध्यवर्त्यपि सामग्रीवैकल्यात् यथा अङ्कुरादिजनने अशक्ततां याति, तथैव 'ज्ञानाग्निना दग्धं' परमाद्वयबोधदीप्त्या प्लुष्टं 'कर्म' यथा अहमेव इत्थं विश्वात्मना स्फुरामि—इत्येवं-रूपेण देहाद्यात्ममानित्वहानेः हेयोपादेयबुद्धिपरित्यागेन यत् किंचित् शुभाशुभं कर्म क्रियमाणं, तत् दग्धवीर्यं न पुनः ज्ञानिनः पिण्डपातादनन्तरं जन्मफलप्रदं 'भवति' देहनिर्माणहेतुः संपद्यते दग्धं बीजमिवाङ्कुरे । तस्मात् न सर्वाहंभावरू-

पं० १० ग० घ० पु० विद्वानात्मना इति पाठः ।
पं० १३ ग० पु० अनन्तरं फलदं भवति इति पाठः ।



पायाः चितिशक्तेः अफलाभिसंधानतया कृतं कर्म भूयो जन्म दातुं प्रभवति इति ॥ ६२ ॥

एवं पुनर्विकस्वरापि चितिशक्तिः कथंकारं देहवती स्यात्?—इत्याह

> परिमितबुद्धित्वेन हि
> कर्मोचितभाविदेहभावनया ।
> संकुचिता चितिरेतद्-
> देहध्वंसे तथा भवति ॥ ६३ ॥

यस्मात् 'परिमितबुद्धित्वेन'—अख्यातिजनितेन देहाद्यभिमानवासनापूर्वककामनाकालुष्यनिश्चयेन यत् कृतं 'कर्म' यथा 'अहम् अश्वमेधेन यक्ष्ये, इह अमुत्र च सुखी भूयासम्, मा कदाचन दुःख्यहं भूयासम्, अमुना कर्मणा वा ऐन्द्रं

पं० ८ क० पु० तथा भातीति पाठः ।
पं० ९ ग० घ० पु० अख्यातिजीवितेनेति पाठः ।
पं० १२ ख० घ० पु० यजे इति पाठः ।

पदं प्राप्नुयाम्' इत्येवं–वासनाविशिष्टस्य कर्तुः एवमनुगुणं कर्म, तस्य मनोवासनालब्धप्ररूढेः कर्मणः 'उचितः' तदनुगुणफलभोक्तृतायोग्यः असौ 'भावी देहः' प्रारब्धकर्मफलभोक्तृशरीराधिकारपरिक्षयात् यत् उत्तरत्र भविष्यच्छरीरं, तस्य या 'भावना' 'अमुना अश्वमेधादिकर्मणा साम्राज्यादि आप्नुयाम्' इति अभिमतकर्मफलवासनाधिरूढिः, तया कर्मोचितभाविदेहभावनया इयं सर्वतः पूर्णापि चितिशक्तिः आणवमायीयमलमूलेन कार्ममलेन आघ्राता 'संकुचिता' व्यापिन्यपि घटाकाशवत् कर्मानुगुणफलभोक्तृशरीरवासनावच्छेदवती संपन्ना सती 'एतद्देहध्वंसे तथा भवति' इति। 'एतस्य' प्रारब्धस्य कर्मफलस्य यो भोक्ता 'देहः' तस्य भोगपरिक्षयात् यो 'ध्वंसो' मृतिः तस्मिन् देहध्वंसे सति सा 'चितिः' उद्भूतकर्मवासना 'तथा भवति'–येन आशयेन पूर्वकर्मफलम् उपार्जितं तत्कर्मफलभोक्ता यो देहः तद्वती संपद्यते, यद्व-



शात् चितिरपि स्वर्गनरकादिभोगभाजनं स्यात्। तस्मात् शरीरीभूत्वा परिमितफललौल्यात् यत् कृतं कर्म तत् फलभोक्तृ जन्म दातुम् अवश्यं प्रभवति। यत् पुनः अशरीरीभूत्वा 'सर्वं ब्रह्मास्मि' इति संविद्रूपतया कृतं, तत् वासनाप्ररोहानासादनात् कथं व्यापिन्याः चितिशक्तेः जन्मने स्यात्?– इति तात्पर्यार्थः ॥ ६३ ॥

एवम् अनात्मतया समुचितं कर्म संसरणाय प्रमातुः भवति–इति चेत्, तर्हि आत्मस्वरूपं वक्तव्यं येन संसारी न स्यात्--इति प्रतिपादितमपि शिष्यजनहृदयङ्गमीकर्तुं पुनः कथयति

यदि पुनरमलं बोधं
सर्वसमुत्तीर्णबोद्धृकर्तृमयम्।
विततमनस्तमितोदित-
भारूपं सत्यसंकल्पम् ॥ ६४ ॥



दिक्कालकलनविकलं
ध्रुवमव्ययमीश्वरं सुपरिपूर्णम् ।
बहुतरशक्तिव्रात-
प्रलयोदयविरचनैककर्तारम् ।६५।
सृष्टयादिविधिसुवेधस-
मात्मानं शिवमयं विबुद्धयेत ।
कथमिव संसारी स्याद्
विततस्य कुतः क्व वा सरणम् ॥६६॥

'यदि पुनः' परशक्तिपातविद्धहृदयः प्रमाता देहादिप्रमातृताभिमानम् अधस्पदीकृत्य 'स्वात्मानं शिवमयं विबुद्धयेत' चिदानन्दैकघनं विजानीयात्, स परिज्ञातस्वात्ममहेश्वरभावः 'कथमिव' केन प्रकारेण 'संसारी' संसरणशीलो भवेत्?, न स्यात्—इति यावत्, यतः चिदचि-

पं० १ क० पु० दिक्कालाकारविकलमिति पाठः ।
पं० ३ क० ग० ब० पु० बहुधा शक्तिव्रातेति पाठः ।
पं० १३ क० पु० प्रकारेण यथा इति पाठः ।



द्रूपपुर्यष्टकात्मा कार्ममलसंबन्धेन संसरति; यः पुनः चिदेकमूर्तिः शिवमयः प्रक्षीणाणवादिमलकञ्चुकः स कथं संसारी?—इति तात्पर्यम् । ननु चिदेकमूर्तिः स्यात् संसारी च भवेत्—इति किं दुष्येत्,?—इत्येवमाशङ्क्याह 'वितत' इत्यादि । 'विततस्य' अनवच्छिन्नदेशकालाकारस्य प्रमातुः देहाद्यभिमानपूर्वस्वकृतवासनापरिक्षयात् पूर्णस्य तस्य 'कुतः सरणम्' सर्वव्यापित्वात्, तदतिरिक्तं किमस्ति यद्वस्तु अपेक्ष्य ततो विश्लिष्टोऽन्यत्र भिन्ने संसरणं गमनं कुर्यात्?; यतो देहादिप्रमातृताभिमानावच्छिन्नस्य किल अपादानाधिकरणादिकारकसंभवः; यः पुनः चिदेकघनो ब्रह्मभूतोऽनवच्छिन्नदेशकालः प्रमाता तस्य संसरणे वाचोयुक्तिरपि न भवेदिति। कीदृशं शिवरूपम् आत्मानं विबुद्धयेत?—इत्याह 'अमलं

पं० १ ख० पु० मलेन संसरतीति पाठः ।
पं० २ ख० पु० शिवः इतिपाठः ।
पं० ६ क० पु० अपेक्ष्यते अतो विशिष्ट इति, ग० पु० विश्लिष्टे इति पाठः।

बोधम्’इत्यादि। अपगत आणवादिमलप्रचयो यस्य तम्, अत एव वैमल्यात् ‘बोधं’ शुद्धचैतन्यम्। तथा ‘सर्वसमुत्तीर्णं’ निरतिशयं ज्ञानक्रियास्वातन्त्र्यं प्रकृतं यस्य–इति तम्, ‘विततं’ देशादिकृतविच्छेदाभावात् व्यापिनम्। तथा अविद्यमाने अस्तोदिते प्रलयोदयौ यस्याः ‘भासो’ बोधदीप्तेः सैव ‘रूपं’ देहो यस्य तम्। अन्यच्च ‘सत्याः’ परमार्थाः ‘ संकल्पाः’ स्वेच्छाविहारा यस्य, यद्यत् इच्छति तत्तथैव भवति–इति तमेवंविधम्। तथा दिक्कालाकारकलनाभिः चर्चाभिः विरहितं व्यापित्वनित्यत्वधर्मयोगात्, अत एव ‘ध्रुवं’ कूटस्थम्, ‘अव्ययम् ’ अविनाशिनम् । तथा ‘ईश्वरं’ स्वतन्त्रम् । अन्यच्च तथा ‘सुपरिपूर्णं’ सुष्ठु निराकाङ्क्षं। तदनु ‘बहुतराणि’ प्रभूतानि शब्दराशिसमुत्थानि ब्राह्म्यादिशक्त्यधिष्ठितानि घटपटादिशक्तिव्रातानि तेषां लयोत्पत्तिविधौ स्वतन्त्रम् । अन्यच्च ‘सृष्ट्यादिविधिसुवेधसम्’ सुप्रवीणं ‘वेधसं’ विधातारम्’–इत्येवमादिविशेष-



णैः सर्वतः परिपूर्णं स्वात्ममहेश्वरं जानानो यत्किंचिदपि कुर्वाणो, दग्धकर्मबीजो न पुनः संसारभाक्, जीवन्नेव विमुक्तो भवेत्–इति यावत्॥६४ ॥ ६५ ॥ ६६ ॥

एवं स्वात्मप्रत्यवमर्शोपपत्त्या ज्ञानिना विगलितकर्मफलाभिलाषेण कृतमपि कर्म न फलाय–इति आवेदयन् स्वानुभवसिद्धं लोकदृष्टान्तमाह

इति युक्तिभिरपि सिद्धं
यत्कर्म ज्ञानिनो न सफलं तत् ।
न ममेदमपि तु तस्ये-
ति दार्ढ्यतो नहि फलं लोके ॥६७॥

अहमेव चिद्घनः स्वतन्त्रः सर्वप्रमात्रन्तरतमत्वेन सर्वकर्मकारी, नाहं वा कर्ता, पारमेश्वरी

पं० ४ ख० पु० प्रत्यवमर्शोत्पत्त्या इति, ग० पु० स्वात्ममहेश्वरोपपत्त्या इति पाठः ।
पं० १० घ० पु० सुफलमिति इति पाठः ।



स्वातन्त्र्यशक्तिः इत्थं करोति–इति मम शुद्धचैतन्यरूपस्य एतावता किम् आयातम्?–'इति युक्तिभिः' प्राक्प्रतिपादितस्वरूपाभिः उपपत्तिभिर्व्याख्यातस्वात्मस्वरूपाविदः प्रमातुः उभयथा देहाद्यहंभावाभावात् हेयोपादेयशून्यत्वेन 'यत् सिद्धं कर्म' निष्पन्नमपि कृतं 'न सफलं' न तत् फलेन युज्यते, तस्य आत्मज्ञानिनः प्रतिपादितवत् उभयथा कृत्रिमत्वाभावात् कृतमपि कर्म कुत्र फलेन योगं कुर्यात्?, देहादिप्रमातृताभिमानस्वभावाश्रयाभावात् न कुत्रचित्,–इति यावत्। कृतस्य कर्मणो या प्रमातुः फलाभिमानरूढिः एष एव आश्रयः, ज्ञानिनस्तु अभिमानाभावात् स्वस्मिन् रूप एव प्रक्षीणं कर्म न फलेन संबध्यते–इति। ननु अभिमानादेव कर्म फलेन युज्यते–इति कुत्र यथा?–इत्याह 'न ममेदमपि' इत्यादि। दृष्टं च एतत्, न अपूर्वं, यथा 'न मम इदं' यज्ञादिकं कर्म 'अपि

पं० ४ क० पु० व्याख्यातस्य त्मस्वरूपेति पाठः।
पं० ८ क० पु० कृत्रिममपि इति पाठः।



तु तस्य' कस्यापि अर्थवतो यजमानस्य 'इति' अनया बुद्ध्या कृतमपि यज्ञादिकं कर्म 'लोके' मूल्यार्थितया फलाभिमानाभावात् न, यतः तत् कर्म पारलौकिकेन फलेन युक्तं कल्पते। तथाहि–'यजन्ति याजकाः, यजते यजमानः' इति न्यायेन यजताम् ऋत्विजां यज्ञकर्म स्वयं कृतवतामपि 'इदम् अश्वमेधादिकं यज्ञकर्म न अस्माकं किंचित्, अपि तु दीक्षितस्य पुण्यवतः, वयं किल इह यज्ञकर्माणि नियमितमूल्यमात्रार्थिनः अत्र न केचनैव, यजमानः पुनः अमुना कर्मणा स्वर्गादिफलभागपि' इति तेषां कर्मफलाभिमानाभावात् न स्वयं कृतमपि कर्म तदीयेन स्वर्गादिना फलेन युज्यते; यजमानस्तु तत्र यज्ञकर्म स्वयम् अकुर्वाण ऋत्विङ्निर्वर्त्यकर्ममुखप्रेक्ष्यपि 'मम इदम् अश्वमेधादिकं यज्ञकर्म, मदीयेन धनेन अमी ऋत्विजः कर्माणि प्रवृत्ताः' इति ममैव स्वर्गादिफलं

पं० ८ ग० पु० किंतु दीक्षितेति पाठः।

देहपातात् अवश्यंभावि,–इति अकुर्वाणस्यापि
यथा समीहितकर्मफलाभिमानदार्ढ्यात् तत् त-
स्य कर्म फलेन युज्यते । अत एव ‘कर्त्रभिप्राये
क्रियाफले’ इति दीक्षितात् कर्तुः ‘यजते यजमा-
नः’ इति आत्मनेपदम्, कर्त्रनभिप्राये तु पर-
स्मैपदं ‘यजन्ति याजकाः’ इति। इयान् महिमा
दुर्लङ्घ्यो विकल्पस्वातन्त्र्यस्य–यत् स्वयं कृत-
मपि कर्म फलाभिमानाभावात् तत्फलेन न यु-
ज्यते, अन्यैः कृतमपि कर्म ‘मम इदम्’ इति
अभिमानदार्ढ्यात् फलयुक्तं स्यात्; तस्मात् ऋ-
त्विग्व्यापारवत् क्रियमाणं योगिना कर्म फला-
भिमानाभावात् न तत् सफलं भवेत्–इति
॥ ६७ ॥

एवं सर्वकर्मसु हेयोपादेयकल्पनाकलङ्कपरि-
त्यक्तबुद्धिः ज्ञानी दीप्तः स्यात्–इत्याह

---

पं० ४ क० पु० कर्मणामभिप्राये इति पाठः ।
पं० १० क० ख० पु० फलं युक्तमिति पाठः ।
पं० ११ ख० पु० ‘योगिना’ इति पदहीनः पाठः



इत्थं सकलविकल्पान्
प्रतिबुद्धो भावनासमीरणतः ।
आत्मज्योतिषि दीप्ते
जुहृज्ज्योतिर्मयो भवति ॥ ६८ ॥

‘इत्थं’ व्याख्यातेन प्रकारेण या ‘भावना’
‘अहमेव चैतन्यमहेश्वरः सर्वात्मना सर्वदा एवं
स्फुरामि’ इति या आत्मनि विमर्शरूढिः, सैव
शनैः प्रसरन्ती ‘समीरणो’ वायुरिव, तेन ज्ञा-
नी ‘प्रतिबुद्धो’ भस्मच्छन्नो वायुना प्रतिबोधितो
वह्निर्यथा ‘सकलविकल्पान्’ ‘पशुरस्मि कर्मब-
न्धबद्धो देहरूपी, मम इदं पुत्रदारादि, अमुना
कर्मणा स्वर्गो निरयो वा भविष्यति’ इत्यादि-
सर्वाः कल्पनाः ‘अहमेव इदं सर्वम्’ इति परा-
मर्शशेषीभूताः ‘आत्मज्योतिषि’ चैतन्यकृशानौ
‘दीप्ते’ पराहन्ताचमत्कारसारे ‘जुहृत्’ अविक-
ल्पकसंविद्रूपानुप्रवेशेन समर्पयन् स ‘ज्योति-

---

पं० १३ क० पु० कलना इति पाठः ।

र्मयो भवति' दाह्यविकल्पेन्धनपरिक्षयात् दाहकाकारः चिदग्निरेव संपद्यते, परप्रमात्रेकवपुः असौ अवशिष्यते–इति यावत् ॥ ६८ ॥

एवं व्याख्यातेन प्रकारेण यः प्रकृष्टज्ञानयोगाभ्यासरतः स शेषवर्तनया कथं कालम् अतिवाहयति–इत्याह

अश्नन् यद्वा तद्वा
संवीतो येन केनचिच्छान्तः ।
यत्र क्वचन निवासी
विमुच्यते सर्वभूतात्मा ॥ ६९ ॥

यत् किंचित् पुरः पतितम् अदनयोग्यं पदार्थम् 'अश्नन्' चमत्कुर्वन्, न पुनः नियमेन, 'इदं पवित्रम्, इदम् अपवित्रम्, इदं कदन्नम्, इदं मिष्टान्नम्' इति हेयोपादेयकल्पनाविरहात्

पं० १ ख० पु० दाहाकार इति, ग० घ० पु० दाहकार इति, क० पु० चिदग्निरिवेति पाठः।

पं० ११ ग० घ० पु० यः किंचिदिति, क० ख० यः कश्चित् इति पाठः।



अयत्नेन आपतितं यदपि तदपि समाहरन् । तथा 'संवीतो येन' इत्यादि। कन्थया चर्मणा वल्कलेन वा तूलपटादिना, दिव्यात्मवस्त्रैः वा समाच्छादितः,–इति उभयथा उत्कर्षापकर्षाभावात्, शरीराच्छादनार्थक्रियार्थी भूत्वा नापि किंचित् द्वेष्टि, नापि स्तौति–इति। कथम् एतत्? यतः स 'शान्तः' सुखदुःखादिविकल्पनातिक्रान्तः–इति। तथा 'यत्र क्वचन निवासी' इति। 'यत्र क्वचन' यादृशे तादृशे स्थाने स्वपरिश्रयमात्रार्थी; न पुनः तस्य क्षेत्रायतनतीर्थादि पवित्रत्वात् स्वीकार्यं भवति, नापि श्मशानश्वपचसदनादि अपवित्रत्वात् परिहार्यं स्यात्, अयत्नेन यत् यत् स्थानम् आपतितम् तत् तत् अधिवसति, पवित्रापवित्रकल्पनाकलङ्कविरहात्। 'विमुच्यते' इति, एवमपि शेषवर्तनया परानुग्रहार्थप्रवृत्तः कालम् अतिवाहयन् 'विमुच्यते' परमशिवीभवति। उक्तं च

पं० १० ख० पु० स परिश्रयमात्रेति पाठः।

'येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचन शायी यस्तं देवा ब्राह्मणं विदुः ॥'

इति । मोक्षधर्मेष्वपि

'अनियतफलभक्ष्यभोज्यपेयं
विधिपरिणामविभक्तदेशकालम् ।
हृदयसुखमसेवितं कदर्यै-
र्व्रतमिदमाजगरं शुचिश्चरामि ॥'

इति । कथम् एवमपि कुर्वन् ज्ञानी स्वयं मुच्येत?–इत्याह 'सर्वभूतात्मा' इति । यतः स ज्ञानी सर्वभूतात्मा, सर्वेषां भूतानाम् आत्मा सर्वाणि च भूतानि तस्य आत्मा–इति कृत्वा न किंचित् बन्धकतया भवति, सर्वं विमुक्तयेऽस्य संपद्यते–इति ॥ ६९ ॥

नापि एवं-रूपस्य निरभिमानस्य यत्किंचित्कुर्वतोऽपि पुण्यपापसंभवः–इत्याह

पं० १२ क० पु० पुण्यपापैः स्पर्शी इति पाठः ।



हयमेधशतसहस्रा-
ण्यपि कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यै-
र्न च पापैः स्पृश्यते विमलः ॥७०॥

य एवं 'परमार्थवित्' स्वात्ममहेश्वरस्वभावसतत्त्वज्ञः, सः अश्वमेध-राजसूयाप्तोर्यामादियज्ञान् निःसंख्यान् फलकामनाभिमानविरहात् 'कर्तव्यतामात्रमिदम्' इत्येवं कृत्वा क्रीडार्थं यदि कदाचित् विहितानि कर्माणि विदधाति; अथवा ब्रह्महनन-सुरापानस्तैन्यादीनि प्रमादोपनतानि महापातकानि अविहितान्यपि अशरीरतया च–इति उभयथा 'अहं मम' इत्यभिमानाभावात् 'परमेश्वरेच्छैव इत्थं विजृम्भते, मम किम् आयातम्' इति बुद्ध्या न 'पुण्यैः' शुभफलैः नापि 'पापैः' अशुभैः स ज्ञानी 'स्पृश्यते'

पं० २ ग० घ० पु० कुरुते वा इति पाठः ।
पं० ६ ख० ग० पु० राजसूयास्तुर्यामादीति पाठः ।

मलिनीक्रियते–इति। कथमेतत्?–इत्याह 'विमलः'–इति। यतः तस्य विगताः प्रक्षीणा आणव-मायीय-कार्ममलाः संसरणहेतवः–इति। एवं मलिनस्य हि प्रमातुः विच्छिन्नदेहादिप्रमातृतया आत्मात्मीयाभिमानभावो येन 'मम इदं कर्म शुभम्, इदम् अशुभम्' इति अभिमानदौरात्म्यात् पुण्यपापसंचययोगः स्यात्; यस्य कर्मफलसंचयो ममत्वहेतुर्मलप्रचयो विगतः स्यात् तस्य अभिमानाभावात् कथं पुण्यपापस्पर्शः। यथा श्रीभगवद्गीतासु

'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते॥'

इति ॥ ७० ॥

एवं-विधस्य ज्ञानिनो नियतचर्यां परामृशन्नाह

मदहर्षकोपमन्मथ-
विषादभयलोभमोहपरिवर्जी।
निःस्तोत्रवषट्कारो
जड इव विचरेदवादमतिः ॥७१॥



'मदो' देहप्रमातृताभिमानः, 'हर्षः' अलब्धस्य लाभात् प्रमोदः, 'कोपः' क्रोधः, 'मन्मथः' संभोगाभिलाषः, 'विषादः' इष्टवियोगात् मूढत्वम्, 'भयं' शत्रोः सिंहव्याघ्रादेर्वा दरः, 'लोभः' कार्पण्यं, 'मोहो' भूतेषु आत्मात्मीयभावः–इति एतान् देहसंस्कारप्रत्यवमर्शान् मध्ये मध्ये समायातानपि 'सर्वं ब्रह्मास्मि' इति परिवर्जयति अविकल्पकसंविद्रूपानुप्रवेशेन स्वात्मप्रत्यवमर्शशेषीभूतान् संपादयति। तथा निर्गतः 'स्तोत्रवषट्कारेभ्यः' यः स, एवं स्तुत्यस्य व्यतिरिक्तस्य अभावात्. न तस्य स्तोत्राद्युपयोगो, नापि वषडादिमन्त्रसंश्रयो, भिन्नस्य देवताविशेषस्य विरहात्; केवलं स 'जड इव विचरेत् अवादमतिः' इति। पूर्णत्वात्-आकाङ्क्षाविरहात् च उन्मत्त इव इतिकर्तव्यतारूपे शास्त्रीये कर्मणि प्रमाणोपपन्ने वा प्रमेयसतत्त्वे प्रमातृभिः सह 'इदम् उपपन्नम्, इदं न' इति विचारबहिष्कृतबुद्धिः,



नापि स्वात्मनि उपदेशम् अपेक्षते, परान् उपदेष्टुं वा प्रमेयम् उपन्यस्यति,—इति दान्तप्रायो भूत्वा सर्वं ब्रह्म अवलोकयन् क्रीडार्थं विहरेदेव—इति जडत्वेन निरूपितः ॥ ७१ ॥

एवमपि परिवर्ज्यमानेनापि मदादिवर्गेण वयमिव ज्ञानी सति शरीरे, किमिव न स्पृश्यते—इत्यत्र कारणमाह

मदहर्षप्रभृतिरयं
वर्गः प्रभवति विभेदसंमोहात् ।
अद्वैतात्मविबोध-
स्तेन कथं स्पृश्यतां नाम ॥ ७२ ॥

समनन्तरकारिकाव्याख्यातो 'मदादिवर्गोऽयं विभेदसंमोहात्' इति आत्मात्मीयरूपो यो 'विभेदसंमोहः' अपूर्णत्वख्यातिः, ततः 'प्रभवति' पशुप्रमातृभ्यो द्वैतभ्रान्त्या हेयोपादेयतया समुत्पद्यते। यः पुनः 'सर्वं ब्रह्मास्मि' इति पर-



माद्वयात्मबोधः प्रकृष्टज्ञानी आकाशकल्पः स 'तेन' मदादिवर्गेण 'कथं नाम स्पृश्यतां' केन प्रकारेण आबिलीक्रियतां; भिन्नं वस्तु भिन्नस्य हि कदाचित् स्वरूपम् अर्पयताम्, ब्रह्मभूतत्वेन गृहीतो मदादिवर्गो ब्रह्मभूतस्य ज्ञानिनः समानजातेः कथं विरोधाय स्यात्?—इति ॥ ७२ ॥

बाह्यस्तवनहवनवर्गोऽपि द्वैतसमाश्रय एव न तस्य परितोषाय अलम्—इत्याह

स्तुत्यं वा होतव्यं
नास्ति व्यतिरिक्तमस्य किंचन च ।
स्तोत्रादिना स तुष्येन्
मुक्तस्तन्निर्नमस्कृतिवषट्कः ॥ ७३ ॥

'स्तुत्यं' किंचिद्देवतारूपं, 'होतव्यं वा' किंचित् ज्ञानिनोऽद्वयबोधरूपस्य 'न व्यतिरिक्तं'

---

पं० १० ख० घ० पु० व्यतिरिक्तमस्य न चेति पाठः ।

पं० १२ ख० पु० मुक्तस्तु निर्नमस्कारवषट्कार इति पाठः ।

भिन्नरूपं विद्यते, यत् स्तूयते हूयते वा–इति। नापि 'कर्तव्यम्' इत्येवं-रूपतया च 'स्तोत्रादिना स' आत्मज्ञः परितोषं याति, अभेदबोधसंभोगेन हि नित्यानन्दमयत्वात् कृत्रिमम् आनन्दं न आद्रियते; तस्मात् निर्गतो नमस्कृतिवषट्केभ्यो यः स एव 'मुक्तो' वेदान्तेषु एवं-स्तुतः–इति ॥ ७३ ॥

नच तस्य भिन्नेन देवगृहेण उपयोगः, स्वशरीरमेव आत्मदेवताधिष्ठानं संविदाश्रयो वा न अन्यः कश्चित्,–इति नो भिन्नं देवगृहम् अस्य–इत्याह

षट्त्रिंशत्तत्त्वभृतं
विग्रहरचनागवाक्षपरिपूर्णम्।
निजमन्यदथ शरीरं
घटादि वा तस्य देवगृहम् ॥७४॥

पं० ४ ग० पु० तथा निर्गतो नमस्कारवषट्केभ्य इति, क० पु० वषट्कारेभ्यः इति पाठः।

पं० १४ क० पु० निजमम्यदपि इति पाठः।



'तस्य' ज्ञानिनो निजः परकीयो वा देह एव देवतावेश्म, स्वात्मदेवतायाः भोग्याधारत्वात्। बाह्यस्तु मेर्वादिप्रासादः तदा देवगृहीभवति यदा गुरुणा शरीरव्याप्त्या षट्त्रिंशत्तत्त्वकलनरूपया परिकल्पितः स्यात्, तद्वतो बाह्योऽपि देवः स्वात्मव्याप्त्या चिद्घनत्वेन परिगृहीतः चेत् तदा सोऽपि तत्र देवो भवेत्, अन्यथा उभयमेतत् जडं शिलाशकलकल्पमेव कथं भक्तान् उद्धरेत्, मृतान् सामीप्यादि वा नयेत्?–इति एवं मुख्यया वृत्त्या 'शरीरं' संविदाश्रयत्वात् देवगृहम्, तद्वतः सर्वेषामपि स्वात्मा देवः,–इति देह एव संप्रबुद्धस्य देवगृहम्। कीदृशं तत्?–इत्याह 'षट्त्रिंशत्तत्त्व' इति। बाह्यं षट्त्रिंशत्तत्त्वव्याप्त्या परिकल्प्यते, परं देहदेवगृहं पुनः साक्षात् षट्त्रिंशता तत्त्वैः 'भृतं' पोषितम्। बाह्यदेवगृहे गवाक्षरचना भवति, इदं तु 'विग्रहरचनागवाक्षपरिपूर्णम्' इति, 'विग्रहे' शरीरे 'रचना' इन्द्रियद्वारपरिपाटिः, सैव

तमोरिकल्पना तया 'परिपूर्णम्' अक्षुण्णम्,–इति बाह्यदेवगृहसदृशम्। न केवलं शरीरं संविद आश्रयः–इति कृत्वा देवगृहं, यावत् यत्किंचिद्वा संविदधिष्ठितं तत्सर्वं तस्य देवगृहम्–इत्याह 'घटादि वा' इति। घटाद्युपलक्षितं विषयपञ्चकम् इदं भोग्यरूपं चक्षुरादिद्वारेण संविदाधिष्ठितम्

'भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः।' (३।२)

इति स्पन्दशास्त्रोपदेशदृशा संविन्मयमेव, ज्ञानिनो भूतशरीरवत् घटादि विश्वं भावशरीरम्–इति कृत्वा तदपि अभिन्नं स्वशरीरवत् 'देवगृहं' देवस्य क्रीडावतः स्वतन्त्रस्य स्वात्ममहेश्वरस्य 'गृहं' भोग्याधिष्ठानम्–इति ॥७४॥

बाह्यदेवगृहे किल भक्तः पुष्पाद्याहरणपूर्वं देवपूजापरो दृष्टः, देहदेवगृहे पुनः ज्ञानी किं कुर्वन् अधितिष्ठति?–इत्याह

पं० ६ क० ख० पु० अधिष्ठितमिति इति पाठः।



तत्र च परमात्ममहा-
भैरवशिवदेवतां स्वशक्तियुताम् ।
आत्मामर्शनविमल-
द्रव्यैः परिपूजयन्नास्ते ॥७५॥

तस्मिन् स्वदेहदेवगृहे प्रकृष्टयोगी, 'परमः' सर्वातिशायी यः चैतन्यलक्षणः 'आत्मा', स एव निःशेषशब्दादिविषयोपभोगाविलायनप्रगल्भत्वात् 'भैरवः' भरण-रवण-वमनस्वभावः, स एव 'शिवदेवता' प्रकृष्टश्रेयोरूपो देवः, तां 'परिपूजयन् आस्ते' अनवरतं वक्ष्यमाणेन क्रमेण तां तर्पयन् परिस्फुरेत्। ननु बाह्यदेवता परिवारयुता भवति, एतां किं-परिवारयुतां समर्चयेत्?–इत्याह 'स्वशक्तियुताम्' इति। 'स्वाः' चैतन्यरश्मिरूपाः चिन्निर्वृतीच्छाज्ञानक्रियाशक्तीनां विभवात्मिकाः चक्षुरादिकरणशक्तयः,

पं० ८ ग० घ० पु० रमणेति पाठः।

ताभिः 'युतां' समन्तात् आवृताम्। कैः परिपूजयन् आस्ते?—इत्याह 'आत्मामर्शन' इत्यादि। 'स्वात्मैव इदं सर्वम्' इति यत् 'आमर्शनं' सर्वपदार्थानां संविद्रूपतया पूर्णाहन्ताविश्रान्तिलक्षणो यः परामर्शः, तेन द्वैतकालुष्यकलङ्कपरिक्षयात् 'विमलानि' यानि शब्दादिविषयपञ्चकरूपाणि पूजार्थं 'द्रव्याणि' जाड्यापगमेन विशुद्धानि, तैः आत्मामर्शनविमलद्रव्यैः—इति। अयमाशयः—ज्ञानी हेयोपादेयभेदकलङ्कपरित्यागेन अयत्नोपनतं शब्दादिविषयपञ्चकं श्रोत्रादिकरणदेवीभिः समाहृत्य अन्तश्चमत्कुर्वन् स्वात्मना अभेदम् आपादयति,—इत्येवम् अनवरतं प्रतिविषयस्वीकारकाले योऽन्तरभेदेन चमत्कारः पूर्णाहन्तास्फुरणम् एतदेव स्वात्मदेवतापूजनम्; अत एव शब्दादयो विषयाः पूजोपकरणम्—इति अवधानवता विषयग्रहणकाले

पं० ४ ग० पु० पराहन्तेति पाठः।
पं० ७ ग० घ० पु० यत्नापगमेनेति पाठः।
पं० १२ क० पु० आसादयतीति पाठः।



प्रतिक्षणं स्वात्मदेवतापूजकेन भाव्यम्,—इति रहस्यविदः। एतदेव स्तुतिद्वारेण राजानकरामो दृब्धवान् यथा

'नित्योद्दामसमुद्यमाहृतजगद्भावोपहारार्पण-
व्यग्राभिस्तव तैजसीप्रभृतिभिर्यच्छक्तिभिस्तर्प्यते।
तन्मांसास्रवसास्थिकूटकलिले काये श्मशानालये
रूपं दर्शयं भैरवं भवनिशासंचारवीरस्य मे ॥'

इति ॥ ७५ ॥

पूजान्ते तावत् अग्निहवनेन भाव्यम्,—इति ज्ञानिनः कथं तत्?—इत्याह

बहिरन्तरपरिकल्पन-
भेदमहाबीजनिचयमर्पयतः।
तस्यातिदीप्तसंवि-
ज्ज्वलने यत्नाद्विना भवति होमः ॥७६॥

'तस्य' एवं-विधस्य स्वात्मदेवतापूजकस्य 'अतिदीप्ते' पराहन्ताचमत्कारभास्वरे चैतन्याग्नौ

'यत्नात् विना' तिलाज्येन्धनादिस्वीकारकदर्थनाया ऋते 'होमो' वह्नितर्पणं संपद्यते। किं कुर्वतः?–इत्याह 'बहिरन्तर' इत्यादि। 'बहिः' नीलादौ प्रमेये यत् स्वपरप्रमातृकल्पनम्, अन्तर्ग्राह्ये सुखादौ च यत् संकल्पनम्,–इत्येवं-रूपोयो 'भेदः' बाह्याबाह्ययोः प्रमातृप्रमेययोः निश्चयसंकल्पनाभिमानवृत्तिस्वभावं नानात्वम् एतदेव 'महाबीजं' प्रमातृप्रमेययोः ततः समुत्पत्तेः, तस्य कल्पनारूपस्य भेदबीजभूतस्य 'निचयो' भेदस्य आनन्त्यात् राशिः, तम् 'अर्पयतः' परमाद्वयदृष्ट्या अविकल्पकसंविद्रूपानुप्रवेशेन स्वात्मवह्नौ जुह्वतः–इति। अयमाशयः–परब्रह्मात्मकस्य योगिनो देहादिप्रमातृताभिमानाभावात् यः स्वरससिद्धः स्वपरप्रमातृप्रमेयकलनपरिक्षयः स एव अकृत्रिमो होमः। यथाह भट्टश्रीवीरवामनकः

'यत्रेन्धनं द्वैतवनं मृत्युरेव महापशुः।
अलौकिकेन यज्ञेन तेन नित्यं यजामहे ॥'

पं० ६ घ० ग० पु० बाह्यग्राह्ययोरिति पाठः।



इति ॥ ७६ ॥

एवं-रूपस्य याजकस्य ध्यानम् आह

ध्यानमनस्तमितं पुन-
रेष हि भगवान् विचित्ररूपाणि।
सृजति तदेव ध्यानं
संकल्पालिखितसत्यरूपत्वम् ॥७७॥

नियताकारचिन्तितस्य आकारस्य अन्यत्र मनोवृत्तेः गमनात् क्षयोऽस्ति, इदं 'पुनरनस्तमितं ध्यानम्', यस्मात् 'एष भगवान्' अपि अनन्तः स्वात्मरूपो महेश्वरः क्रियाशक्तिस्वभावविकल्पस्वातन्त्र्येण यानि 'विचित्राणि रूपाणि सृजति' अनवरतं नानापदार्थान् विकल्परूपान् आकारान् बुद्धिदर्पणे समुल्लिखति, 'तदेव' अस्तोदयवर्जितम् एतस्य 'ध्यानं'-चिन्तनं, न अतोऽन्यत् किंचित्। इतरत्र तु देवताविशेषे

पं० २ क० ग० पु० पूजकस्येति पाठः।
पं० ६ क० ग० पु० संकल्पलिखितेति पाठः।

नानावक्त्राङ्गपरिकल्पनया नैयत्यं स्यात्। सर्वो मनोव्यापारः पराशक्तिस्फारपल्लवभूतः,—इति जानानस्य अनवच्छिन्नम् इदं सर्वं परमेश्वरीभूतम्। तथा 'संकल्पेन' मनसा 'आलिखितं' संविद्भित्तौ चित्रीकृतं 'सत्यरूपत्वं' परमार्थता यस्य ध्यानस्य तत्। एवं यतः सर्वम् इदं प्रकाशमानं विकल्पोल्लिखितं मनोव्यापाररूपमपि प्रकाशानतिरिक्तं सत्यं, सर्वत्र संविदनुगमात्—इति। तदुक्तं श्रीमत्स्वच्छन्दशास्त्रे

'यत्र यत्र मनो याति तत्र तत्रैव धारयेत्।
चालित्वा कुत्र गन्तासि सर्वं शिवमयं यतः॥'

इति। तथा शैवोपनिषदि

'यत्र यत्र मनो याति बाह्ये वाभ्यन्तरे प्रिये।
तत्र तत्र शिवावस्था व्यापकत्वात् क यास्यति॥'

इति। तस्मात् स्वरसोदितम् एतत् योगिनो

पं० १० क० ग० पु० मनस्तत्रैवेति पाठः।
पं० ११ ग० पु० गच्छेतेति पाठः।



ध्यानम्—इति ॥७७॥

जपश्च अस्य कीदृशः स्यात्?—इत्याह

भुवनावलीं समस्तां
तत्त्वक्रमकल्पनामथाक्षगणाम्।
अन्तर्बोधे परिव-
र्तयति यत्सोऽस्य जप उदितः ॥७८॥

वक्ष्यमाणेन क्रमेण यो विश्वस्य प्रतिक्षणम् अभेदेन पराहन्ताप्रत्यवमर्शः 'सो'ऽयम् 'अस्य जप उदितः' अकृत्रिमत्वेन कथितः। कोऽसौ?—इत्याह 'भुवनावलीं समस्तां' षट्त्रिंशत्तत्त्वसमूहान्तर्वर्तिनीं चत्वारिंशदुत्तरशतद्वयसंख्यातां प्राकारपङ्क्तिं निःशेषाम्, तथा 'तत्त्वक्रमकल्पनाम्' इति 'तत्त्वक्रमस्य' आत्मविद्याशिवाख्यस्य 'परिकल्पनां' परिच्छेदम्, 'अथा-

पं० ११ ग० घ० पु० चतुर्विंशत्युत्तरेति पाठः।
पं० १२ घ० पु० प्रकारेति पाठः।
पं० १४ क० ख० पु० शिवाख्यपरिकल्पनामिति समस्तः पाठः

क्षगणम्' इति अन्तर्बहिष्करणरूपम् इन्द्रियसमूहं च—इति 'अन्तर्बोधे' मध्यमप्राणशक्त्यक्षसूत्रभूतायां स्वसंवित्तौ नादबिन्दुप्रवाहक्रमेण 'यत् परिवर्तयति' अरघट्टघटीयन्त्रवत् प्रतिप्राणविक्षेपस्त्राष्टिस्थितिसंहारक्रमेण सर्वमेतत् स्वसंवित्तौ परिभ्रमयाति, प्रतिक्षणं नादात्मना परामृशति—इति यावत्। स एव पूर्णाहन्ताविश्रान्तिलक्षणोऽकृत्रिमः अस्य जपः। अयमाशयः—जपः किल वाच्यरूपाया देवताया वाचकस्य मन्त्रस्य उच्चारः, स च अक्षमालया प्राणशक्तिव्याप्तिकया अक्षपरिवर्तनक्रमेण संख्येयः। परमाद्वययोगिनस्तु स्वा प्राणशक्तिस्तन्तुभूता मध्यमप्राणे प्रवाहक्रमेण नदन्ती स्वरसोदिता सर्वाक्षक्रोडीकारेण सहजैव अक्षमाला उच्यते; यतः सर्वम् इदं वाच्यं षट्त्रि-

पं० ३ ग० पु० प्रवाहरूपेण क्रमेण यः परिवर्तयतीति पाठः।
पं० १३ क० पु० मध्यमप्राणवाहिक्रमेणेति, ग० घ० पु० मध्यवाहक्रमेणेति पाठः।
पं० १४ ख० पु० सर्वाक्षरक्रोडीति पाठः।



शत्तत्त्वात्मकं विश्वं प्राणशक्तावेव प्रतिष्ठितं सत्, प्रतिप्राणविक्षेपम् उदयव्ययक्रमेण परास्वभावा भगवती प्राणस्वरूपम् आश्रित्य विमृशन्ती प्रतिप्राणस्पन्दम् अवधानवतो योगिनो जपम् अकृत्रिमं साधयति। अत्र जपसंख्या

'एकविंशत्सहस्राणि षट्शतानि दिवानिशम्।
जपो देव्याः समुद्दिष्टः सुलभो दुर्लभो जडैः॥'

इति शैवोपनिषदि। शिवसूत्रेषु

'कथा जपः' (३ उ० २७ सू०)

इति। एवम् एष वन्द्यचरणानाम् अवधानवतामेव गोचरः—इति ॥ ७८ ॥

इदं व्रतम् अस्य—इत्याह

सर्वं समया दृष्ट्या
यत्पश्यति यच्च संविदं मनुते।
विश्वश्मशाननिरतां
विग्रहखट्वाङ्गकल्पनाकलिताम् ॥७९॥

पं० २ ग० पु० प्रतिक्षणविक्षेपमिति पाठः।
पं० १३ घ० पु० समानदृष्ट्या इति पाठः।

विश्वरसासवपूर्णं
निजकरगं वेद्यखण्डककपालम् ।
रसयति च यत्तदेतद्
व्रतमस्य सुदुर्लभं च सुलभं च ॥८०॥

एवं 'यत्' वक्ष्यमाणम् 'एतदेव अस्य' ज्ञानिनो 'व्रतम्' स्वात्मदेवतासमाराधनाय नियमः। कीदृशम्? तदाह 'सुदुर्लभं च सुलभं च' इति। सुष्ठु कृत्वा दुःखेन अख्यातिपरिक्षयात् अन्योपायपरिहाररूपेण परमेश्वरानुग्रहेण लभ्यते,—इत्यतः 'सुदुर्लभं;' तथा सुखेन बाह्यास्थिभस्माद्याभरणाहारनियमादिस्वीकारकदर्थनां च विना लभ्यते,—इत्यतः 'सुलभं च'। किं तत् व्रतम्?—इत्याह 'सर्वम्' इत्यादि। यत् सर्वम् इदं प्रातीतिकं भेदावभासरूपं युक्त्यागमानुभवपरिशीलनेन अभेददृशा—'सर्वमिदं एकः स्फुरामि'

पं० १० ग० घ० पु० भस्माद्याहरणाहारेति पाठः।
पं० १३ ग० घ० पु० प्रातीतिकभेदावभासेति समस्तः पाठः।



इति समीक्षते। यथा श्रीभगवद्गीतासु

'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥'
(६।२९)

इत्यादि। एवम् अभेदबुद्धिदार्ढ्यमेव व्रतम्। अन्यच्च 'यत् विश्वश्मशाननिरतां संविदं मनुते' तदपि व्रतम्। यथा 'विश्वं' ग्राह्यग्राहकस्वभावं घटदेहादिजडलक्षणपदार्थशवशतसमाक्रान्तम्—इति कृत्वा तदेव 'श्मशानं' पितृवनम्,—यतः संविदेका भगवती अजडा, अतोऽन्यत् तदुल्लासितं सर्वमिदं शवस्थानीयं जडम्; अतो विश्वस्य श्मशानेन सादृश्यम्।—तस्मिन् 'विश्वश्मशाने' निःशेषेण 'रतां संविदं' समुत्पत्तिनिधनतया महाभीषणे मध्यवर्तिनीं 'मनुते'-अवबुध्यते। व्रती किल श्मशाने वसति, अयं पुनः

पं० ३ क० ग० पु० पश्यते इति पाठः।
पं० ८ क० ख० पु० अत इति पाठः।
पं० ६ क० ख० पु० लक्षणमिति पाठः।

अलौकिको व्रती 'सर्वत्र अहमेव एकचित्तत्त्वपरमार्थः' इति मत्वा, जडैः पशुप्रमातृभिः-घटादिभिः प्रमेयैश्च परेतस्थानीयैः सह उन्मत्तवत् क्रीडां कुर्वाणः संसारभुवम् इमां सर्वप्रमातृप्रमेयनिधनतया भीषणां श्मशानस्वभावाम् अध्यास्ते। अन्यच्च यत् 'विग्रहखट्वाङ्गकल्पनाकलितां संविदं मनुते' इति। 'विग्रहः'-शरीरं स एव 'खट्वाङ्गकल्पना'—कङ्कालविधिः, योगिनः किल स्वशरीरप्रमातृताभिमानदुर्ग्रहसंक्षयात् शरीरातीतं स्वात्मानं मन्यमानस्य संस्कारशेषीभूतो विग्रहः शवप्रायमेव,–इति अवधारयतः स्वशरीरमेव कङ्कालमुद्राकल्पना, तया 'कलितां' भोग्याधारत्वेन मुद्रिताम्। वीरव्रतिनो हि श्मशानस्थस्य खट्वाङ्गमुद्रया भाव्यम्, अतोऽस्य स्वसंविद्वपुषः स्वशरीरमपि वेद्यतया भिन्नम् अवधारयतः सैव खट्वाङ्गमुद्रा,–इति एतदपि अस्य व्रतम्। तथा 'वेद्यखण्डककपालं रसयति'

पं० १२ ग० घ० पु० भिन्नमिव धारयत इति पाठः।



चर्वयति; यच्च शब्दादिविषयपञ्चकलक्षणं सर्वभोग्यरूपम् इदं 'वेद्यं' ज्ञेयत्वकार्यत्वाभ्यां परिच्छिन्नम्,–इति 'खण्डकं' कर्परप्रायं, तदेव 'कपालं' शिरोऽस्थिशकलं 'यत् रसयति' साराहरणक्रमेण पूर्णाहन्ताविश्रान्त्या चमत्कुरुते–इति एतदपि व्रतम्। व्रतिना किल कपालस्थं वीरपानं रस्यते–इत्याह 'विश्वरस' इति। 'विश्वस्मिन्' वेद्यशब्दादिविषयपञ्चकरूपे कपालखण्डे योऽसौ सारभागः चर्वणामृतमयोऽंशः स एव परमानन्ददायित्वात् 'रसासवः' उत्तमं पानं, तेन 'पूर्णं' निर्भरम्। एतत् उक्तं स्यात्–विश्वस्य यः शल्कस्थानीयः कठिनोऽंशः पात्रकल्पः स एव कपालं, तद्गतः सारभागः चमत्कारक्षम आह्लाददायित्वात् पानम्–इति। कपालं तु व्रतिनः करगतं भवति–इति आह 'निजकरगम्' इति। 'निजाः' स्वात्मीयाः ये 'कराः' चक्षुरादिकरणदेवीस्वभावाः चिन्मरीचयः, तेषु भोग्यतया तत्

पं० ४ ग० पु० पराहन्तेति पाठः।

वेद्यखराडकं विषयत्वं गच्छति,–इति निजकरगम्, यथा पाणिस्थेन कपालेन पानं पीयते, तथैव वेद्यखराडककपालेन विश्वरसासवः चक्षुरादिसंविरकरैः योगिना समाहृत्य आस्वाद्यते। अयमाशयः–योगी सर्वदेव यथोपनतं विषयपञ्चकं करणदेवीभिः आहृत्य युक्त्या स्वचैतन्यभैरवविश्रान्तिम् अव्युच्छिन्नां भजमानः चरमक्षणपर्यन्तं यथोपदिष्टम् अद्वयदृशा निर्वाहयति–इति एतदेव अस्य परिशीलितसद्गुरुचरणपङ्कजस्य व्रतम्, अतोऽन्यत् शरीरशोषणमात्रम्–इति ॥ ८० ॥

प्राक् प्रतिपादितं संकलयन् अस्य उपदेशस्य उत्कृष्टत्वम् आह

इति जन्मनाशहीनं
परमार्थमहेश्वराख्यमुपलभ्य ।
उपलब्धृताप्रकाशात्
कृतकृत्यस्तिष्ठति यथेष्टम् ॥ ८१ ॥

पं० ७ क० पु० विश्रान्त्यवच्छिन्नामिति, ग० पु० विश्रान्तिमव्युत्पन्नामिति पाठः।
पं० ११ क० पु० संकल्पयन्निति पाठः।



'इति' समनन्तरोक्तेन प्रकारेण यत् प्रतिपादितं रहस्यं 'परमार्थमहेश्वराख्यं' तात्त्विकं महेश्वरम् 'उपलभ्य' स्वात्मनि दृढप्रतिपत्त्या सम्यक् अनुभूय। कीदृक्? आह 'जन्मनाशहीनम्' इति, येन अधिगतेन उत्पत्तिमरणे न स्याताम्–इति यावत्। 'कृतकृत्यस्तिष्ठति यथेष्टम्' इति, योगी एतत् प्राप्य कर्तव्यतान्तरस्य अभावात् निष्पन्नपरपुरुषार्थो 'यथेष्टं' स्वेच्छाऽतिक्रमं विना स्वातन्त्र्येण चक्रभ्रमवत् धृतशरीरः 'तिष्ठति' कालम् अतिवाहयन् आस्ते। कथम्? आह 'उपलब्धृताप्रकाशात्' इति। एतद्रहस्यपरिशीलनेन सर्वासु दशासु अनुभवितृतया 'प्रकाशः' परिस्फुरणं तस्मात्–इति, शरीरस्थोऽपि पूर्णानन्दमयः–इति यावत् ॥ ८१ ॥

इत्थं स्वात्मानं यः कश्चित् जीवतां मध्यात् जानानः स सर्वः तद्रूपः स्यात्,–इति अधिकारिनियमाभावम् आह



व्यापिनमभिहितमित्थं
सर्वात्मानं विधूतनानात्वम् ।
निरुपमपरमानन्दं
यो वेत्ति स तन्मयो भवति ॥ ८२ ॥

'इत्थम्' इति उक्तेन प्रकारेण 'व्यापिनम्' अनवच्छिन्नचिदानन्दैकघनं शिवम् 'अभिहितं' युक्त्यागमानुभवपरिशीलनक्रमेण आवेदितं 'यो वेत्ति' यः कश्चिदेव प्राणिप्रायो जानाति, 'स' सर्वः त्यक्तसंकोचः 'तन्मयः' शिव एव स्यात्–इति । अत्र स्वात्मज्ञाने न अधिकारिनियमः; यतो ये केचन जन्ममरणादिदोषाघ्राताः तिर्यञ्चोऽपि वा ते सर्वे स्वात्ममहेश्वरप्रत्यभिज्ञानात् तन्मया भवन्ति,–इति यच्छब्दस्य परामर्शः। कीदृशं च?'सर्वात्मानम्' इति। सर्वेषां प्रमातृप्रमेयाणाम् आत्मा, सर्वाणि वा प्रमातृप्रमेयाणि यस्य आत्मा, तं सर्वोत्तीर्णं

पं० १४ क० ख० पु० परमार्थः इति पाठः ।



सर्वमयम्–इति यावत् । अत एव 'विधूतं'-न्यक्कृतं, सर्वदा सर्वत्र, चिद्रूपतया स्फुरणात् 'नानात्वं' भेदानन्त्यं येन तम्, एवम् आकाङ्क्षाविरहात् 'निरुपमो'-विशेषणरहितः प्रकृष्ट 'आनन्दो' यस्य तम् एवं-विधम् ,–इति स्वात्मानं जानानः सर्वः शिवरूपी स्यात्–इति ॥ ८२ ॥

एवम् अधिगतस्वात्ममहेश्वरः स्वशरीराधिकारपरिक्षये कुत्र शरीरं परित्यजेत्, किं वा याति?–इत्यादिसंशयं परिहरति

तीर्थे श्वपचगृहे वा
नष्टस्मृतिरपि परित्यजन्देहम् ।
ज्ञानसमकालमुक्तः
कैवल्यं याति हतशोकः ॥ ८३ ॥

एवं परिशीलितस्वस्वरूपो ज्ञानी 'सर्वमिदं स्वात्मप्रकाशस्वातन्त्र्यम्' इति परमाद्वयदृशा गाढं समाश्वस्तहृदयः, 'तीर्थे' प्रयागपुष्करकुरु-





क्षेत्रादौ महापुण्ये स्थाने, अथ वा श्वपचसदने अन्त्यजनगृहोपलक्षिते अतिपापीयसि शरीरं मुञ्चन्,–इति उभयथा स्वीकारपरित्यागकदर्थनाविरहितोऽपि आत्मज्ञानादेव 'कैवल्यं याति'–कलेवरपरिक्षयात् प्रधानादिकार्यकारणवर्गेभ्योऽन्यां–चिदानन्दैकघनां तुर्यातीतरूपां केवलतां याति–इति यावत् । यतः अस्य सर्वमिदं विश्वं स्वात्मना पूर्णं समदृशा परमेश्वराधिष्ठितं पश्यतो न क्षेत्राक्षेत्रप्रविभागः, अत एव 'हतः' पराकृतो विकल्पशङ्कासमुत्थः 'शोको' येन स एवम् । यथा उक्तम्

'हिमवति गङ्गाद्वारे
वाराणस्यां कुरौ प्रयागे वा ।
वेश्मनि चण्डालादेः
शिवतत्त्वविदां समं मरणम् ॥'

इति श्रीनिर्वाणयोगोत्तरे । नापि अस्य देहपातावसरे स्मृत्युपयोगः–इत्याह 'नष्टस्मृतिरपि'

पं० २ ग० ङ० पु० वर्गेभ्यः अन्यास्मिन् इति पाठः ।
पं० ६ घ०पु० हतः चूर्णीकृत इति पाठः ।



इति । आस्तां संस्मृतिः–इति अपिशब्दार्थः । यदि वा स ज्ञानी शरीरत्यागकाले तदुत्थवातपित्तश्लेष्माभिभवात् 'नष्टस्मृतिः' काष्ठपाषाणतुल्यत्वात् विगतस्वात्मसंबोधः कलेवरम् अवशो भूत्वा त्यजति, तथापि प्रागधिगतस्वात्मज्ञानः कैवल्यम् अवश्यं याति ; ततो न स्वात्मज्ञानाधिगमे प्रमयसमये स्मरणास्मरणे विशेषोऽस्ति । ननु तीर्थातीर्थप्रविभागोऽस्य स्वात्मज्ञानविदो मा भूत्, यत् पुनः अन्तकाले स नष्टस्मृतिरपि–इति यदेव स्वात्मज्ञानम् उपायतया गृहीतं, तस्य देहपातावसरे तु विस्मरणं चेत्, तर्हि कथं स मुक्तः स्यात् ?। यदुक्तम्,

'अन्तकालेऽपि मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥'
(८।५)

इति श्रीगीतासु । एवमपि अत्र स्मरणस्यैव उप-

पं० १ घ० पु० सस्मृतिः इति पाठः ।
पं० ४ ख० पु० विस्मृतस्वात्मबोध इति पाठः ।
पं० ७ क० पु० प्रलयसमये इति पाठः ।

योगः; यदपि परमेश्वरस्मरणाभावेऽपि अन्तकाले तद्भावापत्तिः स्यात्, तर्हि सर्वः पशुजनः प्रमयसमये मूढोऽपि विशेषाभावात् परमेश्वरसमापत्तिं यायात्; वाक्यानि च एवमादीनि अप्रमाणानि स्युः; न चैवम्—इत्यत्र उत्तरमाह 'ज्ञानसमकालमुक्तः' इति। सत्यं, न अस्य स्मरणेन उपयोगः, किंतु सद्गुरुणा यदैव तस्य कर्णमूले स्वात्ममहेश्वरज्ञानोपदेशः कृतः तस्मिन्नेव काले 'अहमेव सर्वमिदम्' इति अधिरूढस्वात्मज्ञानपरमार्थो विगलितमायादिकञ्चुकभावो न अन्यत् किंचित् अपेक्षते, केवलं संस्कारशेषतया चक्रभ्रमवत् शरीरं वहमानः,—इति न पुनः तस्य उत्तरकाले स्मरणास्मरणकदर्थना; यस्मात् अज्ञानजनिताणवमायीयकञ्चुकसंबन्धे सति देहकञ्चुकं प्रभवति, स्वात्मज्ञानोपदेशेन अज्ञानजनितकञ्चुकक्षयात् कथं देहकञ्चुकं विनष्टप्रायं पर्यन्ते ज्ञानिनो यन्त्रणां कर्तुम्

पं० १६ क० ग० पु० जनितमायीयकञ्चुकेति पाठः ।



अलम्?,—इति स्वात्मज्ञानकथनावसर एव स जीवन्नेव मुक्तः स्यात्। यथा उक्तं कुलरत्नमालिकायां साहस्रिकायाम्

'यदा गुरुवरः सम्यक्कथयेत्तदसंशयम्।
मुक्तस्तत्रैव कालेऽसौ यन्त्रवत्केवलं वसेत्॥'

इति। श्रीमन्निशाटनेऽपि

'गोदोहमिषुपातं वा नयनोन्मीलनात्मकम्।
सकृद्युक्तः परे तत्त्वे स मुक्तो मोचयेत्परान्॥
यस्मात्पूर्वं परे न्यस्तो येनात्मा ब्रह्मणि क्षणम्।
स्मरणं तु कथं तस्य प्राणान्ते समुपस्थिते॥'

इति। अथ वा आत्मविदः पर्यन्तक्षणः स्वानुभवैकसाक्षी केन अनुभूयते, यद्वशात् तस्य स्मरणम् अस्मरणं वा परिकल्प्यते, यावता तत्र अर्वाग्दृशां नास्ति गोचरः—इति सर्वज्ञास्तत्र प्रष्टव्याः; न पुनः शरीरचेष्टामात्रात् मरणावसरे अधिगतपरमार्थस्यापि देहत्यागक्षणः शुभाशुभत्वेन अनुमातुं शक्यः। तस्मात् अवश्यमेव सदा तद्भावभावितं स्वात्मज्ञानविदं स्वात्मस्थ एव पर-

मेश्वरो मरणावसरे स्वं स्वरूपं काष्ठपाषाणतुल्यमपि स्मारयति। यदुक्तम्

'स्वस्थचेष्टाश्च ये मर्त्याः स्मरन्ति मम नारद।
काष्ठपाषाणतुल्यांस्तानन्तकाले स्मराम्यहम् ॥'

तथा

'स्थिरे चेतसि सुस्वस्थे शरीरे सति यो नरः।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामकम् ॥
ततस्तु म्रियमाणं तं काष्ठपाषाणसंनिभम्।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥'

इति भगवता लक्ष्मीसंहितायाम् उक्तम्। एवमत्र सदातद्भावभावितत्वमेव हेतुः, अन्यथा पूर्वानुभवसंस्कारदार्ढ्यं विना कथम् अन्ते स्मृतिरपि स्यात्,–इति न केनचिदपि ज्ञानिनो मरणावसरे समुपयोगः–इति ॥ ८३ ॥

यदि पुनः तीर्थाद्याश्रयणम् उक्तप्रकारेण न कुत्रचिदपि अङ्गभावं याति, तर्हि किमिति विद्वद्भिः तत् समाश्रीयते?–इति विषयविभागम् आह

पं० ७ घ० पु० स्थिते मर्त्यं इति पाठः।



पुण्याय तीर्थसेवा
निरयाय श्वपचसदननिधनगतिः।
पुण्यापुण्यकलङ्क-
स्पर्शाभावे तु किं तेन ॥ ८४ ॥

येषां विदुषामपि देहादिप्रमातृताग्रहः साम्प्रतं न विगलितः स्वात्मज्ञानचर्चायां च न तथा समाश्वासः, तेषाम् इष्टापूर्तादिधर्मसंग्रहं कुर्वताम् अधर्मसंग्रहं वा, प्रयागादितीर्थसेवा मरणावसरे क्षेत्रपरिग्रहः 'पुण्याय' उत्तमलोकप्राप्तये निश्चितं स्यादेव। तथैव 'श्वपचसदननिधनगतिः' इति। श्वपाकादिगृहोपलक्षिते पापीयसि स्थाने 'निधनगतिः' प्रमयप्राप्तिः 'निरयाय' अवीच्यादिनरकपाताय एतेषां किमिति न भवेत्?, देहप्रमातृताग्रहस्य विद्यमानत्वात्। मरणस्थानानुगुणं भोगमपि भुक्त्वा शुभाशुभेषु देहेषु जायन्ते पुनः म्रियन्ते च,–इति अनवरत-

पं० ६ क० ग० पु० क्षेत्रे परिग्रह इति पाठः।

जन्ममरणप्रबन्धा देहाद्यात्ममानिन एवं-प्रायाः स्युः। यस्य पुनः स्वात्मज्ञानप्रत्यवमर्शदार्ढ्यात् देहादिप्रमातृताभिमानो निःशेषेण विगलितः, तस्य चिन्नभःस्वभावस्य धर्माधर्मस्वभाववासनास्पर्शप्रच्चये वृत्ते सति किं तेन?। एवं स यतः शुभाशुभकर्मभाजां तीर्थादिपरिग्रहः, ततः तेन तीर्थसेवादिना विमलस्य ज्ञानिनो नास्ति उपयोगः। यदुक्तं मानवे धर्मशास्त्रे

'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः।
तेन चेदविवादस्त्वं मा गङ्गां मा गयां गमः॥'

इति। अत्र देहात्ममानितैव हृदयवर्तिनी यमः, सा यैः पूर्णस्वात्ममहेश्वरस्वभावम् उपलभ्य संभक्षिता, तेषां कथम् एष तीर्थादिसेवाप्रयासः?—इति सिद्धान्तः॥ ८४॥

ननु प्राक् प्रतिपादितं—यथा ज्ञानदग्धाणवमायीयकार्ममलस्वरूप आत्मा पिण्डपातात् स्वस्वरूपस्थ एव न पुनर्भवप्ररोहं विधत्ते दग्धबीजमिवाङ्कुरम्—इति। स्वात्मज्ञानाविर्भावसमकालं देहकञ्चुकभङ्गः चेत्, तर्हि उत्तरत्र मा विधत्तां; यत् पुनः विद्यमाने देहादिकञ्चुकबन्धे कथंकारं स तद्गतधर्माच्छुरितो न स्यात्, तदाच्छुरितः सन् मृतः कथं न संसारी?—इति चोद्यम् अपवदति



तुषकम्बुकसुपृथक्कृत-
तण्डुलकणतुषदलान्तरक्षेपः।
तण्डुलकणस्य कुरुते
न पुनस्तद्रूपतादात्म्यम्॥ ८५॥

तद्वत् कञ्चुकपटली-
पृथक्कृता संविदत्र संस्कारात्।
तिष्ठन्त्यपि मुक्तात्मा
तत्स्पर्शविवर्जिता भवति॥ ८६॥

'तुषकम्बुकाभ्यां' सुष्ठु 'पृथक्कृतो' विश्लिष्टो यः 'तण्डुलकणः' तस्य यः 'तुषदलान्तरक्षेपः'

पं० ३ ग० पु० धर्माधर्माच्छुरित इति पाठः।

प्रागिव पुनः तत्रैव विन्यासः, स यथा तुषदलान्तरप्रक्षेपः 'तण्डुलकणस्य' तद्रूपतया अङ्कुरजननक्षमत्वेन स्थितोऽपि 'तादात्म्यं' गाढावष्टम्भं 'न कुरुते' अयःशलाकावत् भिन्नावेव तुषतण्डुलौ तिष्ठतो, न पुनरेककार्यजननव्यग्रौ भवतः, 'तद्वत्' तथैव ज्ञानिन इयं संवित्' चेतना 'कञ्चुकपटल्याः' आणवमलादिकञ्चुकसमूहात् 'पृथक्कृता' 'अहमेव स्वात्ममहेश्वरस्वभावो विश्वात्मना सर्वदा सर्वत्र स्फुरामि' इति स्वात्मज्ञानपरिशीलनदार्ढ्यात् समुद्धृता, 'अत्र' इति अस्यां कञ्चुकपटल्यां कंचित्कालं शेषवर्तनया देहभावेन 'तिष्ठन्त्यपि' स्थिता सती 'विमुक्तात्मा' प्रध्वस्तबन्धा 'तत्स्पर्शविवर्जिता भवति', तस्याः देहादिकञ्चुकपटल्याः 'स्पर्शः' पुण्यापुण्यरूपकार्ममलोपजनितो य उपरागः

पं० ९ क० पु० विश्वात्मतया स्फुरामीति, ख० पु० विश्वात्मना स्फुरामीति, ग० पु० सदा स्फुरामीति पाठः।
पं० १२ ख० पु० देहभावे तिष्ठन्तीति पाठः।
पं० १३ क० पु० प्रध्वस्तबन्धतयेति पाठः।
पं० १५ क० ख० पु० पराग इति पाठः।



संसाराङ्कुरजननक्षमः, तेन 'विवर्जिता' परिहृता संपद्यते, यथा तुषदलान्तरे क्षिप्तः तण्डुलोऽङ्कुरप्ररोहस्पर्शरहितो भवति—इति। इदम् उक्तं स्यात्—अज्ञानकारणकः तावत् संसारः, तत्र समुदितस्वात्मज्ञानदलितकञ्चुकस्य योगिनः संवित् न पुनः संसारहेतुः, अज्ञानजनितसामग्रीवैकल्यात्; नापि तस्य शेषवर्तनया संस्कारवशेन तिष्ठन् अयं देहकञ्चुकबन्धो ज्ञानाग्निदग्धाज्ञानमूलः स्वगतधर्माविर्भावेन संसारप्ररोहं दातुम् अलम्,—इति ज्ञानी जीवन्नेव तुरीयरूपो देहाभावात् तुर्यातीतरूपः,—इति उभयथा पुनः न काचित् संसारशङ्का—इति॥ ८६॥

ननु शेषवर्तनया यावत् शरीरावस्थितं योगिसंवेदनमधिगतस्वस्वरूपमपि देहोपाधिकृतमालिन्यस्यापि तावदंशेन विद्यमानत्वात् अशुद्धमेव,—इति दृष्टान्तेन परिहरति

पं० ४ ग० पु० अज्ञानकारक इति पाठः।

कुशलतमशिल्पिकल्पित-
विमलीभावः समुद्गकोपाधेः ।
मलिनोऽपि मणिरुपाधे-
र्विच्छेदे स्वच्छपरमार्थः ॥ ८७ ॥

एवं सद्गुरुशासन-
विमलस्थिति वेदनं तनूपाधेः ।
मुक्तमप्युपाध्यन्तर-
शून्यमिवाभाति शिवरूपम् ॥ ८८ ॥

यथा 'मणिः' अतिप्रवीणवैकटिकसमुद्द्यो-
तितनैर्मल्यः सन् समुद्गकविश्लिष्टत्वात् 'मलि-
नोऽपि धूसरप्रायो भवति, स एव पुनः समुद्ग-
कोपाधिविच्छेदे आवरणविशेषाभावे 'स्वच्छपर-
मार्थः' यथावत् निर्मलस्वरूपः संपद्यते। 'एवम्'

पं० ६ क० ख० पु० संवेदनमिति पाठः ।
पं० ७ क० ख० पु० मुक्तमुपाधीति पाठः ।
पं० १० ग० घ० पु० विशिष्टत्वादिति, विशिष्टः सोपाधिरिति पर्यायोपेतः
पाठः ।



अनेनैव प्रकारेण इदं 'वेदनं सद्गुरुशासनविम-
लस्थिति', परिपूर्णस्वात्मज्ञानवित् यो दैशिकप्र-
वरः, तस्य यत् 'शासनं' स्वात्मज्ञानरहस्यमुखा-
म्नायः तस्य परिशीलनेन विगता कालिकारूपस्य
आणवमलस्य मायीयकार्ममलाभित्तिभूतस्य स्थि-
तिर्यस्य, तत् एवं-विधं मौलिकमलप्रक्षयात् न-
भोरूपंमपि वेदनं 'तनूपाधेः' 'तनुः' शरीरं तल्ल-
क्षणा-'उपाधिः' विशेषणं, ततो 'मुक्तं' पृथक्कृतं
विशेषणान्तराभावात् तत् 'शिवरूपम् आभात्ये-
व' देहभङ्गात् परमशिवत्वेन भासते—इति यावत्।
यथा समुद्गकोपाधिविरहात् मणिः स्वस्वरूपो
भाति, तथैव स्वस्वरूपावबोधात् विमलमपि
अशुद्धाभिमतशरीरोपाधिक्षयात् विशुद्धमेव सं-
वेदनं भासते। ननु मणिर्यथा समुद्गकोपाधेः
विमुक्तोऽपि पुनः अन्यतमोपाधिपरिग्रहात् स-
मलः संपद्यते, तथैव तनूपाधेर्मुक्तमपि संवेदनं
मणिवत् उपाध्यन्तरं चेत् गृह्णाति, तर्हि पुनरपि

पं० १ क० ख० पु० संवेदनमिति पाठः ।

सोपाधित्वात् अशुद्धमेव,–इति परिहरति 'उपाध्यन्तरशून्यमपि' इति। न दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यं, यतः पिण्डपातात् तस्य महाप्रकाशवपुषः परमाद्वयरूपस्य सर्वमिदम् उपाध्यभिमतं स्वाङ्गकल्पं भासते, अतो व्यतिरिक्तस्य उपाध्यन्तरस्य अभावात् न पुनः तदुपाध्यन्तरेण विशिष्यते,–इति न मणिना उपाधिग्रहणस्य साम्यम्। अज्ञानमूलं किल शरीरोपाधिग्रहणं, तत् चेत् स्वात्मज्ञानकुठारेण दलितं कथंकारं पुनः उपाधिसंश्रयो भवेत्? । यदुक्तम्

'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥'
(३।१६)

इति श्रीगीतासु। तस्मात् स्वस्वरूपज्ञानात् योगिनः स्वसंवेदनं सदैव शुद्धमेव–इति ॥ ८८॥

पं० ४ ख० पु० पराद्वयस्येति पाठः।
पं० ५ ख० पु० उपाध्याभिन्नमिति पाठः।
पं० १३ ग० घ० पु० तत्पदमिति पाठः।



सर्वोपाध्युत्पत्तौ यथावत्परिशीलितव्यापारमनःसंस्कारप्ररूढिरेव निमित्तं, न पुनः नूतनत्वेन किमपि आयाति–इति आवेदयति

शास्त्रादिप्रामाण्याद्
अविचलितश्रद्धयापि तन्मयताम्।
प्राप्तः स एव पूर्वं
स्वर्गं नरकं मनुष्यत्वम् ॥ ८९ ॥

आगमप्रामाण्यात्, गुरूपदेशपारम्पर्यकथनात्, युक्तिपरिशीलनात् प्राग्वासनाप्ररूढया श्रद्धया वा स्वात्मज्ञाने, इष्टापूर्ते पाशवे कर्मणि वा कृताभ्यासः प्रमाता तदैव तत्संस्कारप्ररोहेण 'तन्मयतां' तत्तदभ्यस्तवस्तुस्वरूपतां 'प्राप्तः' सन् उत्तरत्र देहपातात् वासनानुगुण्येन 'स्वर्गं' निरतिशयां प्रीतिं, 'नरकं' अवीच्यादिदुःखं, 'मनुष्यत्वं' सुखदुःखोभयरूपं मनुष्यभावं प्राप्नोति; न पुनः अनभ्यस्तवासनस्यापि पुरुष-

पं० ५ क० ख० पु० अविदालितेति पाठः।

स्य देहपातादेव यत् किंचित् आपतति। यतः सर्वः प्रमाता येन आशयेन यत् अभ्यस्यति तदैव स तद्रूपो भवति, किंतु मरणसमये स्फुटतया यत् अभिलषितं वस्तु तत् प्रमातुः अभिव्यक्तिं याति,–इति न अभ्यस्तवस्तुनः कदाचित् विपर्ययः स्यात्; नापि अनभ्यस्तवस्तुस्वरूपं किंचित् अपूर्वत्वेन आपतेत्,–इति सर्वत्र पूर्वाभ्यास एव कारणम्–इति भावः ॥ ८९ ॥

एवं सदा तद्भावभावितत्वं स्वात्मविदो देहत्यागावसरे पूर्णप्रथाहेतुः, न पुनः लोकपरिदृश्यः पुण्यापुण्यरूपो मरणावसरः कश्चित् स्वर्गनिरयादिकारणं परिकल्पनीयम्–इत्याह .

अन्त्यः क्षणस्तु तस्मिन्
पुण्यां पापां च वा स्थितिं पुष्यन्।
मूढानां सहकारी-
भावं गच्छति गतौ तु न स हेतुः ॥ ९० ॥



येऽपि तदात्मत्वेन विदुः
पशुपक्षिसरीसृपादयः स्वगतिम्।
तेऽपि पुरातनसंबोध-
संस्कृतास्तां गतिं यान्ति ॥ ९१ ॥

एवं प्रतिपादिते ज्ञानिनि 'अन्त्यः क्षणः' चरमो देहविनाशसहभावी कालो धातुदोषवशेन दुष्टव्याध्यनुभवात् वा समीपस्थितैः प्रमातृभिः अनुमितां 'पुण्यां' पापमयीं 'वा स्थितिं पुष्यन्' सेवमानः सन् 'मूढानां'-देहात्ममानिनां प्रमातृणामेव 'सहकारीभावं' कारणत्वं 'गच्छति'। गच्छतु वराकः, न एतावता निर्भग्नदेहात्ममानित्वे सदा स्वात्ममहेश्वरनिभालनचतुरे 'तस्मिन्' योगिनि 'सः' अन्त्यः क्षणो 'गतौ' देहात् देहान्तरप्राप्तौ 'हेतुः' कारणं भवेत्। कुतः एतदागतम्?–इति निदर्शयन् आह 'येऽपि'

पं० ८ ग० पु० पापीयसीमिति पाठः।
पं० ११ ग०पु० गच्छतु वा न इति पाठः।

इति।‘येऽपि’-केनापि आशयवशेन शापादिना वा पापयोनयः पशुरूपतामपि प्राप्ताः ‘स्वगतिम्’ आत्मस्थितिं मरणावसरे ‘आत्मत्वेन’ जानीयुः, ‘ते’ मूढाः सन्तोऽपि प्रागभ्यस्तस्वात्मज्ञानवासनाप्रबोधानुगृहीताः स्वात्मस्थितिं च लभन्ते। गजेन्द्रमोक्षणादौ यथा हस्तिना पशुस्वभावेनापि सता प्राक्परिशीलितपरमेश्वरभक्तिसंस्कारप्रबुद्धेन विष्णुं भगवन्तं स्तुत्वा सम्यक् कञ्चुकं विहाय स्वस्वरूपम् उपलब्धम्, कः तत्र स्मरणे हेतुः अभूत्। अयं भावः–शरीराद्युत्थधातुदोषवशात् काष्ठपाषाणचेष्टो ज्ञानी पुण्यं पापम् आलविडालादिकं[1] वा यत् किंचित् प्रलपन् देहं त्यजति, न एतावता स्वस्थचेष्टतया यत् अभ्यस्तं ज्ञानादिकं तस्य विप्रलोपः स्यात्; शरीरादिगता धर्माः शरीरादावेव निपतन्ति, न पुनः सदा

१ आलो वानर इति।

पं० ५ क० घ० पु० वासनानुगृहीता इति पाठः।
पं० ६ घ० पु० मरणे हेतुरिति पाठः।



भावितं वस्तु स्थगयितुं प्रभवन्ति,–इति आमरणान्तं सर्वत्र प्ररूढिरेव परमार्थः। यथा गीतासु उक्तम्

‘यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥’
(८।६)

तथा

‘तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥’
(१०।१०)

इति भावितान्तःकरणतैव पर्यन्तगतिदानहेतुः॥ ९१॥

एवं दर्शितदृष्ट्या यतः सदा तद्भावभावितत्वम् अपहस्त्य नूतनत्वेन शरीरविनाशे न अपूर्वं किंचित् समापतेत् ज्ञानिनः, यतो देह एव विनाशी, केवलं स एव विनश्यति, न पुनः वासनाप्ररोहः–इति दर्शयन् आह

पं० १३ ग० घ० पु० समाधत्ते इति पाठः।

स्वर्गमयो निरयमय-
स्तदयं देहान्तरालगः पुरुषः ।
तद्भङ्गे स्वौचित्याद्
देहान्तरयोगमभ्येति ॥ ९२ ॥

एवं ज्ञानावसरे
स्वात्मा सकृदस्य यादृगवभातः ।
तादृश एव सदासौ
न देहपातेऽन्यथा भवति ॥ ९३ ॥

'तत्' तस्मात् शरीरघटादिनिविष्टः 'पुरुषः' —सर्वस्य कार्ममलाधिवासित आत्मा स्वर्गाद्युभिप्रायपूर्वकृतकर्मफलवासनावासितान्तःकरणः 'स्वर्गमयः' प्ररूढस्वर्गफलवासनाविशिष्टत्वात् स्वर्गफलभोक्ता—इति यावत् । एवं दुष्कृतपूर्वकर्मवासनाप्ररूढो नरकफलभोक्ता, केवलं देह उभयकर्मफलभोगायतनं 'तद्भङ्गे स्वौचित्यात्'— इति, तस्मिन् देहक्षये 'स्वस्य' आत्मनो यथाहि-



तवासनानुगुणयात् अन्येन भोगायतनेन शरीरान्तरेण समनन्तरं संबन्धम् उपयाति, उत्तरकालं येन विशिष्टकर्मवासनादत्तफलभोगभागी भवति। तथैव 'ज्ञानावसरे' उपदेश्यस्य गुरूपदिष्टस्वात्मप्रकाशनकाले 'स्वात्मा' चैतन्यं 'सकृत्' एकवारं 'यादृक्' यादृशः 'अवभातः' उपदेशक्रमानुसारेण परिपूर्णस्वातन्त्र्यलक्षणामितां वा परामर्शदशां गतः, 'तादृश एव' सदा 'असौ' येनैव स्वरूपेण ज्ञानिना स्वात्मा सर्वकालं परामृष्टः ताद्रूप्येण वासनाप्ररोहात् तस्य प्रथते, 'न' पुनः 'देहपाते' प्रकाशितोऽपि स्वात्मा ज्ञानिनः 'अन्यथा' समाच्छादितो 'भवति'। नहि भातम् अभातं स्यात्, अपरथा न कश्चित् किंचित् अभ्यसेत्,—इति सर्वव्यवहारविप्रलोपो भवेत्,

'धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥'

इत्यादि सर्वं च त्रुट्येत्; तस्मात् मरणकाले शरीरं

यथा अस्तु तथा अस्तु, केवलं वासनाप्ररोहः स्वात्मगतः सर्वस्य बन्धे मोक्षे च हेतुः—इति ॥ ९३ ॥

यदि पुनः धातुवैषम्यात् शरीरे मरणव्यथोपलब्धिः स्यात्, न एतावता अभ्यासप्ररोहे काचित् क्षितिः,—इति आवेदितामेव स्थितिम् उपलब्धुं परिघटयते

करणगणसंप्रमोषः
स्मृतिनाशः श्वासकलिलता छेदः।
मर्मसु रुजाविशेषाः
शरीरसंस्कारजो भोगः ॥ ९४ ॥
स कथं विग्रहयोगे
सति न भवेत्तेन मोहयोगेऽपि ।
मरणावसरे ज्ञानी
न च्यवते स्वात्मपरमार्थात् ॥ ९५ ॥

'करणगणस्य' बाह्यान्तर्गतस्य त्रयोदशात्म-



कस्य सम्यक् 'प्रमोषः' स्वरूपविप्रलोपः, यथा चक्षुरादीनि इन्द्रियाणि रूपादिविषयालोचनायां न प्रगल्भन्ते, वागादिकर्मेन्द्रियाण्यपि एवं वचनादानादौ न प्रवर्तन्ते, नापि बुद्धिः यथार्थम् अर्थम् अध्यवस्यति, मनसोऽनवस्थितिः, अहङ्कारोऽपि मध्ये मध्ये संस्कारतया आस्ते। तथा 'स्मृतिनाशः' अनुभूतविषयस्य संप्रमोषः, बन्धुभिरर्थ्यमानोऽपि मुमूर्षुः पुरोऽवस्थितं वस्तु शतशोऽनुभूतमपि न प्रत्यभिजानाति; अत एव सदा तद्भावभावितत्वं विना ब्रह्मविद्यादिकथनम्, अन्तकाले दानम् अन्यत् किंचित् वा तस्याम् अवस्थायां नभश्चित्रमिव न चित्ते प्ररोहति, किंतु तत् इतिकर्तव्यतामात्रं कार्यम्,—इति नियोगः। तथा 'श्वासः' कण्ठ्यो वायुः, तस्य 'कलिलता' कण्ठदेशे गद्गदिका हिक्का वा। अन्यच्च 'मर्मसु छेदः' अस्थिसंधिषु त्रोटः। तथा

पं० ३ क० ग० घ० पु० वागादीति वाक्यसंदर्भो नास्ति।
पं० १४ क० ग० ब० पु० कौष्ठ्य इति पाठः।

'रुजाविशेषाः' ज्वरातीसारप्रभृतयः–इति। एवं यः 'शरीरस्य' भूतकञ्चुकस्य वातपित्तश्लेष्मधातुवैषम्यात् 'शरीरसंस्कारजो भोगः' देहजो दुःखानुभवः, 'स कथं' केन प्रकारेण 'विग्रहयोगे सति' ज्ञानिनोऽपि 'न भवेत्' स्यादेव। 'तेन'–हेतुना 'ज्ञानी' सदा अधस्पदीकृतदेहाद्यभिमानः समाविष्टस्वात्ममहेश्वरभावश्च, मरणक्षणजनितशारीराज्ञानसंबन्धेऽपि 'स्वात्मपरमार्थात्' प्ररूढचैतन्यप्रत्यवमर्शसतत्त्वात् 'न च्यवते' न अन्यथाभावं याति। यतोऽसौ ज्ञानी न्यक्कृतदेहसंबन्धो न तज्जेन भोगेन तन्मयीकर्तुं पार्यते, केवलं लोकवत् चेत् शरीरपातसमनन्तरं क्षणं न उपलभते,–इति एतावता तस्य स्वस्थहृदयस्य स्वसंकल्पिताभिप्रायेण स्वस्थचेष्टतया अभ्यस्तभगवद्भक्तेः न किंचित् अपूर्वं

पं० ६ घ० पु० देहाद्यभिमानित्व इति पाठः।
पं० ११ ग० घ० पु० देहबन्ध इति पाठः।
पं० १२ घ० पु० लोकश्चेदिति, क० ख० पु० उपलभ्यते इति च पाठः।
पं० १३ घ० पु० आश्वस्तहृदयेति पाठः।



समापतति; तस्मात् ज्ञानी स्वात्मप्रथासमनन्तरमेव मुक्तः, न शरीरसंस्कारोऽस्य बन्धदायी,–इति शतशः प्राक् प्रतिपादितम्। यस्तु सदा देहात्ममानी पुण्यपापमयः, स कथं देहसंस्कारोद्भूतसुखदुःखादिभोगजनितं तन्मयत्वं न आयाति। यदुक्तम्

'यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते॥'
(१४।१४)

इत्यादि। सत्त्वादयो गुणाः प्रकृतिधर्माः तन्मयस्यैव नियन्त्रणां विदधते, येन पुनस्ततो विविक्ततया परिशीलिता न तं प्रति एते केचन,–इति ज्ञानिनोऽन्य एव पन्थाः। ये पुनः अदृष्टगुरुचरणाः पशुप्रमातारः ते स्वगतान् धर्मान् अन्यत्र आपादयन्ति। यथा यदि अयं ज्ञानी स्यात्, किमिति व्याध्याद्युपहतशरीरो भुङ्क्ते परिदधाति च?; यदि वा मरणसमये जाड्यम् आयातः, स्मृतम् अनेन न किञ्चित्,–इत्येवं

बहुप्रकारम् अविद्योपहतत्वात् विवदमानाश्च केन पर्यनुयुज्यन्ताम्। यदि अयं ज्ञानी स्यात् देहधर्मसंस्कारयुक्तश्च भवेत्, किम् एतावता च तस्य दुष्येत्?। ज्ञानिनः स्वात्मप्रकाशः तत्तदवस्थाविचित्रोऽपि स्वात्मप्रकाश एव, न पुनः तस्य स्वात्मानुभवितृतया विप्रलोपः स्यात्, येन ज्ञानं नश्येत्। पूर्णषाड्गुण्यमहिमापि भगवान् वासुदेवः कृष्णावतारे व्याधशराघातजनितव्यथो भूतशरीरं त्यक्तवान्,–इत्येवं कृत्वा, किं तस्य जगत्प्रभोः स्वस्वरूपविप्रलोपोऽभूत्,?–इति आ कीटात् सदाशिवान्तस्यापि देहसंस्कार एतादृश एव; किंतु एकः स्वात्मप्रत्यवमर्शमात्रसनाथदेहः, अपरस्तु देहाद्यात्ममानितासतत्त्वः,–इति इयान् विशेषः। तस्मात् शरीरधर्माः ज्ञान्यज्ञानिनोः सदृशा एव, न एतावता फलसाम्यम्,–इति एतदेव गीतासु उक्तम्



'सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥
(३।३३)

इति ॥ ९५ ॥

इदानीम् अक्रमेण क्रमेण च ज्ञानयोगपरिशीलने विचित्रपरशक्तिपातमेव कारणं प्रतिपादयन् फलभेदम् आह

परमार्थमार्गमेनं
झटिति यदा गुरुमुखात् समभ्येति।
अतितीव्रशक्तिपातात्
तदैव निर्विघ्नमेव शिवः ॥ ९६ ॥

यस्मिन्नेव काले जनः पश्चिमजन्मा 'गुरुमुखात्' प्रवरदैशिकवक्त्रात् 'एनं' शतशः प्रतिपादितं 'परमार्थमार्गं' पूर्णस्वातन्त्र्यलक्षणं स्वात्मसंबोधमुखाम्नायरहस्यसरणिं यः कश्चित् 'अभ्येति' समभियाति, स 'तदैव' तस्मिन्नेव अवसरे गुरूपदेशसमनन्तरमेव अनन्तरायं कृत्वा 'शिव

एव' स्यात्। श्रीकुले यथोक्तम्

'हेलया क्रीडया वापि आदराद्वाथ तत्त्ववित्।
यस्य संपातयेद् दृष्टिं स मुक्तस्तत्क्षणात्प्रिये ॥'

इति। ननु कथम् एवं-विधं मुखाम्नायरहस्यमेव उपनयेत्–इत्याह 'अतितीव्रशक्तिपातात्' इति। अतिशयेन 'तीव्रः' कर्कशो योऽसौ अनुग्रहाख्यायाः पारमेश्वर्याः 'शक्तेः पातः' पशुहृत्कमलावतरणं, येन पशुरपि गुर्वाम्नायवेदनात् शिवीभवति, जीवन्नेव मुक्तः–इति यावत्। यथा ताम्रद्रव्यं सिद्धरसपातात् सुवर्णीभवति। अयमर्थः–परमेश्वरानुग्रहोपाय एव स्वात्मज्ञानलाभः,–इति न अत्र नियतिशक्तिसमुत्थं जपध्यानयज्ञादिकम् उपायतया क्रमते। अनुग्रहशक्तिविद्धहृदयस्य तु हठादेव अक्रमं देवतामुखाम्नायरहस्यं हृदयम् आवर्जयति, येन झटित्येव परमेश्वरीभावं याति,–इति अपर्यनुयोज्यो विचित्रः पारमेश्वरः शक्तिपातः–इति ॥ ९६ ॥

पं० ३ क० पु० संपादयेदिति, ख० पु० संप्रापयेदिति पाठः।



यस्य पुनः मध्यमन्दमन्दतरादिभेदेन प्रवृत्तः शक्तिपातः, तस्य गुरूपदेशम् आमरणक्षणं यावत् योगक्रमेण विमृशतः पिण्डपातात् शिवत्वं स्यात्–इति प्रतिपादयति

सर्वोत्तीर्णं रूपं
सोपानपदक्रमेण संश्रयतः।
परतत्त्वरूढिलाभे
पर्यन्ते शिवमयीभावः ॥ ९७ ॥

एवं किल शक्तिपातमन्दत्वात् पूर्णज्ञानोपदेशानासादनेन 'सर्वोत्तीर्णं रूपं' सर्वतत्त्वपर्यन्तवर्तिस्वभावं 'संश्रयतः'–साक्षात्कुर्वतः, कथम्?–इत्याह, सोपानपदक्रमेण' इति। कन्दनाभि-हृत्कण्ठ-लम्पिका-बिन्दु-नादशक्तिरूपाणि 'सोपानानि' ऊर्ध्वम् आक्रमणाय तीर्थान्येव तेषां 'पदम्'–आसादनं, तत्र हानादानरूपः 'क्रमः' शनैःशनैः कन्दे ततो नाभौ ततो हृदि,-इत्येवम् आक्रमणं तेन–इति। एवं याव-

त्परमार्थप्ररोहोपलब्धौ पिण्डपातावसरे योगिनः तस्य क्रमेण शिवतास्वभावा स्थितिर्भवति,– इति एषा क्रमयुक्तिः कथिता ॥ ९७ ॥

एवमपि क्रमयोगम् अभ्यस्यतो योगिनः समाश्वस्तस्यापि सतः तथारूढिर्न स्यात्, अभीष्टप्राप्तौ अन्तरायो जायते ; यदि परम् अनासादिततत्त्वस्य मरणं स्यात्, तदा किं भवेत्– इत्याशङ्कां परिहरति

तस्य तु परमार्थमयीं
धारामगतस्य मध्यविश्रान्तेः ।
तत्पदलाभोत्सुक-
चेतसोऽपि मरणं कदाचित्स्यात् ॥ ९८ ॥
योगभ्रष्टः शास्त्रे
कथितोऽसौ चित्रभोगभुवनपतिः ।
विश्रान्तिस्थानवशाद्
भूत्वा जन्मान्तरे शिवीभवति ॥ ९९ ॥

पं॰ ३ ख॰ पु॰ क्रममुक्तिरिति पाठः ।



एवम् उल्लङ्घनक्रमेण योगम् अभ्यस्यतः केनापि अन्तरायेण 'मध्यविश्रान्तेः' कुत्रचित् चक्राधारेऽपि अनुभवोपलब्धेः तत्रैव परितोषं गतस्य, अत एव 'परमार्थमयीं धाराम् अगतस्य' परतत्त्वरूपां प्रतिज्ञातां दशां सर्वाध्वोत्तीर्णां अप्राप्तवतो, यदि वा 'तत्पदलाभोत्सुकचेतसोऽपि' प्रतिज्ञातपरमार्थसत्तासादनसाभिलाषस्यापि 'कदाचित्' मध्ये विपत्तिः संभाव्यते, तदा एतस्य अलब्धलाभस्यापि पिण्डपातात् का गतिः?–इत्याह 'योगभ्रष्टः' इत्यादि । स 'योगात्' समाधेः उभयथा 'भ्रष्टः' चलितः 'शास्त्रे' आगमग्रन्थे 'कथितः' उक्तः। कीदृक् भवेत्?–इत्याह 'चित्र' इत्यादि । पिण्डपातादेव 'चित्रभोगानि' नानाश्चर्यस्त्र्यन्नपानमाल्यवस्त्रानुलेपनगीतवाद्यादिप्रधानानि यानि 'भुवनानि' स्वविश्रान्त्यनुगुणानि तत्त्वेश्वरस्थानानि, तेषु 'पतिः' ईश्वरो भवति मरणसमनन्तरमेव दिव्यैर्भोगैः युज्यते–इति यावत्। तद्योगाधिकार-

परिच्चये पुनरपि स योगभ्रष्टः कथं स्यात्?–इत्याह 'विश्रान्ति' इत्यादि। 'विश्रान्तिस्थानस्य' कन्दादेः प्रदेशस्य 'वशात्' तदभ्याससंस्कारप्रबोधसामर्थ्यात् स 'जन्मान्तरे' द्वितीये जन्मनि 'भूत्वा' संसारे अधिकारिशरीरं योगाभ्यासयोग्यं प्राप्य, पूर्वाभ्यस्तं योगम् प्रयासेन स्वीकृत्य, हेलया परमार्थमयीं प्राग्जन्मप्रतिज्ञातां दशाम् अधिरुह्य, पिण्डपातात् शिव एव भवति ॥ ९९ ॥

अथ अभ्यस्यतोऽपि योगं योगिनो मनश्चाञ्चल्यात् विश्रान्तिम् एकदेशेऽपि मनागपि अलभमानस्य, योगं प्रति श्रद्धावतश्च पिण्डपातात् का गतिः स्यात्?–इत्याह

परमार्थमार्गमेनं
ह्यभ्यस्याप्राप्य योगमपि नाम।
सुरलोकभोगभागी
मुदितमना मोदते सुचिरम् ॥ १०० ॥



विषयेषु सार्वभौमः
सर्वजनैः पूज्यते यथा राजा।
भुवनेषु सर्वदेवै-
र्योगभ्रष्टस्तथा पूज्यः ॥ १०१ ॥

'एनम्' इति शतशः प्रतिपादितं स्वात्मज्ञानसतत्त्वं पन्थानम् 'अभ्यस्य' श्रद्धाभक्तिभ्यां सेवित्वापि चित्तदोषानवस्थानेन यथावद्योगलक्षणां विश्रान्तिं जन्ममध्येऽपि अनधिगतः सन् मृतश्चेत्, तदा स योगभ्रष्टो ज्ञानयोगविषयप्ररूढश्रद्धाभक्तिप्रसादसामर्थ्येन देवलोकभोगभागी साह्लादचित्तः 'सुचिरं' कालं हर्षं प्रयाति, सुरैरपि भुवनेषु निजनिजस्थानेषु पूज्यो भवति। क इव?–इत्याह 'सार्व' इत्यादि। 'यथा सार्वभौमो राजा' सप्तद्वीपेश्वरो राजा चक्रवर्ती 'विषयेषु' नानामण्डलेषु 'सर्वजनैः पूज्यते' समभ्यर्च्यते, 'तथैव' अयं प्रक्षीणपुण्या-

पं० ३ ख० पु० स्थाने इति पाठः।

पुण्यविषयः समुत्पन्नवैराग्यः पश्चिमजन्मा[10] व-न्योऽस्माकं, यस्य स्वात्मनि जिज्ञासार्थं प्राक्-जन्मनि उद्यमोऽभूत्-इति सुरैरपि स्तूयते-इति यावत् ॥ १०० ॥ १०१ ॥

तस्य लोकान्तरभोगाधिकारनिवृत्तेः अनन्तरं किं स्यात्?-इत्याह

महता कालेन पुन-
र्मानुष्यं प्राप्य योगमभ्यस्य ।
प्राप्नोति दिव्यममृतं
यस्मादावर्तते न पुनः ॥ १०२ ॥

देवलोकेषु यथानिर्दिष्टेषु भोगान् भुक्त्वा, अतिदीर्घेन 'कालेन' स योगभ्रष्टः संसारेऽस्मिन् मनुष्यभावम् आगत्य, योगाभ्याससाधनयोग्यं शरीरम् आसाद्य प्राग्जन्मनि मनश्चाञ्चल्यात् यो योगो दुष्प्रापोऽभूत्, तमेव 'योगं' प्राग्जातभ-

10 पश्चिमजन्मेति अस्मिन्नेव जन्मनि मोक्षाधिगमा दन्तिमजन्मबन्ध इत्यर्थः



क्तिश्रद्धाप्ररूढयोगवासनासंस्कारप्रबोधम् अनायासेन 'प्राप्य' समभ्यस्य च देहान्ते 'दिव्यम् अमृतं'-परतत्त्वस्वरूपम् उपलभते,-परस्वरूपतादार्ढ्यं गच्छति-इति यावत् । अत एव तस्मात् पुनरावर्तनं तस्य न स्यात्-इति । एवं महति कल्याणे स्वात्मज्ञानविषये मनागपि प्रत्यवमर्शः संसारसरणाय न भवति । यदुक्तं श्रीगीतासु

'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥'
( २।४ )

इति । तथा

'अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिम्.................॥'
(६।३७)

पं० १ ग० घ० पु० प्रबोधबुद्धमिति पाठः ।
पं० ४ क० पु० स्वरूपदार्ढ्यमिति परशब्दहीनः पाठः, ख०पु० स्वरूपतादात्म्यमिति पाठः ।
पं० ७ ग० घ० पु० संसारोद्धरणाय भवतीति पाठः ।

इत्यादिप्रश्नादारभ्य

'अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥'
( ७।४५ )

इति उत्तरपर्यन्तो ग्रन्थो मुनिना प्रतिपादितोऽपि स्मर्तव्यः—इति ॥ १०२ ॥

एवम् अनेन ज्ञानयोगक्रमेण जन्तोः मनागपि स्पृष्टस्य सत इयान् विभूत्यतिशयो यः प्रवक्तुं न पार्यते, तस्मात् सर्वात्मना विवेकार्द्रहृदयैः जननमरणनिवृत्तौ सावधानैर्भाव्यम्—इति निरूपयति,

तस्मात् सन्मार्गेऽस्मिन्
निरतो यः कश्चिदेति स शिवत्वम् ।
इति मत्वा परमार्थे
यथातथापि प्रयतनीयम् ॥१०३॥

यत एवं स्वात्मप्रत्यवमर्शाभ्यासः प्रतिपादितक्रमवशात् उत्तमफललाभः, 'तस्मात्' एतस्मि-

पं० ४ग० घ० पु० ग्रन्थोऽत्रार्थे इति पाठः ।



न् सुशोभने 'मार्गे' प्रकृष्टमुक्तिप्रापके पथि 'यः कश्चित् निरतः' इति अधिकारिनियमाभावः प्रदर्शितः। 'यः कश्चित्' जनो जननमरणव्याध्यादिक्लेशशतपरिपीडितो 'निरतो' विवेकबुद्ध्या निःशेषेण रतः तत्रैव श्रद्दधानो भूत्वा निमग्नः, 'स' जन्तुः अचिरात् लघुनैव कालेन 'शिवत्वम् एति' सकलसांसारिकक्लेशान् अवधूय परश्रेयोरूपदशाम् एकेनैव जन्मना प्राप्नोति । यथा शिवधर्मोत्तरे शास्त्रे

'इहैकभाविको मोक्ष एष तावत्परीक्ष्यताम् ।
अनेकभाविका मुक्तिर्भवतां केन वार्यते ॥'

इति । 'इति मत्वा' एवं विमृश्य तस्मिन् 'परमार्थे यथा तथा' येन तेनापि प्रकारेण 'प्रयतनीयं' प्रकर्षेण समुद्यमः कार्यः। 'प्रधाने यत्नः फलवान्' इति कृत्वा अत्र अर्थे मनागपि अवलेपो न विधेयः, येन योगाभ्यासेन स्वात्म-

पं० ११ ख० पु० अनेन भविता इति पाठः ।

प्ररूढिश्चेत् समुत्पन्ना सिद्धं नः समीहितम्, न चेत् दिव्यलोकान्तरप्राप्तिः। ततोऽपि प्रत्यावृत्तस्य प्राक्समभ्यस्तयोगवासनाप्रबोधबलेन पुनरपि योगसंबन्धः,–इति श्रेयोमार्गपरिशीलनात् न विरुद्धं किंचित् कर्तुः समापतति,–इति परमपुरुषार्थसाधनायां मनागपि अवलेपो न कार्यः–इति शिवम् ॥ १०३ ॥

एवं शास्त्रकारः शेषभट्टारकोक्तं परमार्थसारोपदेशं शिवाद्वयशासनक्रमेण युक्त्यनुभवागमसनाथं प्रतिपाद्य, स्वात्मनः परितोषमात्रार्थितया स्वाभिधानप्रदर्शनपूर्वकम् 'अयमेव उपदेशः परपुरुषार्थसादनोपायः' इति निरूपयन् ग्रन्थार्थोपसंहारम् आह

इदमभिनवगुप्तोदित-
संक्षेपं ध्यायतः परं ब्रह्म
अचिरादेव शिवत्वं
निजहृदयावेशमभ्येति ॥ १०४ ॥

पं० १२ क० घ० ग० पु० साधनेति पाठः।



'इदं' प्रथमानं वितत्य प्रतिपादितं यत् 'परं' प्रकृष्टं 'ब्रह्म' बृंहकत्वात् परिपूर्णानन्दमयं स्वात्मस्वरूपं 'ध्यायतः' अनायासेन स्वात्मनि प्रत्यवमृशतो जनस्य 'अचिरात्'-शीघ्रमेव, नतु पुनः बहूनां जन्मनामन्ते–इति। तत् एवं-विधस्य ब्रह्मभूतस्य 'शिवत्वम् अभ्येति' निःश्रेयसप्राप्तिः संभवति। कथं? 'निजहृदयावेशं' कृत्वा, 'निजं हृदयं' परामर्शस्थानम् आविश्य। कीदृशं तत् ब्रह्म? कीर्तनीयनाम्ना 'अभिनवगुप्तेन उदितः' प्रकाशितः 'संक्षेपः' तात्पर्यं यत्र तत् एवं-विधम्। अत्र च नामव्याजेन इदमपि उक्तं स्यात्, यथा–'अभिनवो' योऽन्यैः अदृष्टः परब्रह्मरहस्यातिशयो 'गुप्तश्च' अवच्छन्न इव अभूत्, स एवंविध 'उदितः' प्रकाशितः 'संक्षेपो' यत्र तदेवं-विधं ब्रह्म–इति। एवम् आवेदयता दुर्लभता उपदेशस्य प्रतिपादिता

पं० [illegible] ग० घ० पु० एवंविधो ब्रह्मभूतः शिवत्वमभ्येति निःश्रेयसप्राप्तिं समनुभवतीति पाठः।

स्यात् ॥ १०४ ॥

ग्रन्थपरिमाणं निरूपयन् अस्मिन् प्रकरणे कर्तृत्वम् आह

आर्याशतेन तदिदं
संक्षिप्तं शास्त्रसारमतिगूढम् ।
अभिनवगुप्तेन मया
शिवचरणस्मरणदीप्तेन ॥ १०५ ॥

'इदं शास्त्रसारं' बहूनां ग्रन्थानां यत् प्रकृष्टं सतत्त्वं तत् 'मया संक्षिप्तं' ग्रन्थसहस्रैरपि उपपादयितुम् अशक्यम् तदेव लघुना वृत्तशतपरिमाणेन स्वीकृत्य उक्तम्,–इत्यनेन प्रतिभाकौशलम् उक्तं भवेत्! कीदृशेन मया? 'शिवचरणस्मरणदीप्तेन' इति। 'शिवस्य' परश्रेयःस्वभावस्य स्वात्मस्थस्य चिदानन्दैकमूर्तेः यानि 'चरणानि' चिद्रश्मयः तेषां 'स्मरणं' शब्दादिविषयग्रहणकाले निभालनं प्रतिक्षणं



स्वानुभवाप्रमोषः, तेन 'दीप्तः' पराहन्ताचमत्कारभास्वरः, अत एव कीर्तनीयाभिधानेन। अन्यथा कथं देहाद्यात्ममानिनोऽज्ञातस्वात्ममहेश्वरसतत्त्वस्य इयति महार्थोपदेशे अस्य कर्तृताधिकारित्वम् उपपद्यते?, यतो यो यत्स्वभावः स तत्स्वभावं विवेक्तुं प्रगल्भते,–इति उपदेष्टुः समाविष्टमहेश्वरस्वभावोऽनेन वाक्येन उक्तः स्यात्–इति शिवम् ॥ १०५ ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तविरचितः
परमार्थसारः ॥

---

श्रीमतः क्षेमराजस्य सद्गुर्वाम्नायशालिनः।
साक्षात्कृतमहेशस्य तस्यान्तेवासिना मया ॥ १ ॥
श्रीवितस्तापुरीधाम्ना विरक्तेन तपस्विना।
विवृतिर्योगनाम्नेयं पूर्णाद्वयमयी कृता ॥ २ ॥

---

संपूर्णेयं परमार्थसारसंग्रहविवृतिः कृतिस्तत्रभवत्परममाहेश्वरश्रीराजानकयोगराजस्य ॥

---

पं० ६ ग० घ० पु० वक्तुमिति पाठः।

THE KASHMIR SERIES OF TEXTS & STUDIES.

(Publications of the Research Department, KASHMIR STATE.)

Written or Edited

BY

Mr. Jagadisha Chandra Chatterji, B. A., (Cantab), Vidyavaridi.

OPINIONS OF SCAOLARS ON THE SERIES:

Your publications will be very welcome to scholars in Europe.—Dr. F. W. Thomas.

Indian Literature is much indebted to you for your scholarly labours.--Dr. Barnett.

The work you are doing so thoroughly is most useful......This research in Kashmir is in most able hands.—Professord' Oldenburg.

Splendid, scholarlike.—Prof. Garbe.

Valuable work.—The Hon'ble Sir John Woodroffe.

......Congratulate you and the Government of Kashmir on the excellent and scholarly work.—Sir P. Arunachalam.

Very valuable......would do credit to you & to the Kashmir Darbar.—Dr. S. K. Belvalkar, M. A., PH. D.

---

Works already published.

---

1. *Hindu Realism*: in English, dealing with the Nyaya-Vaisheshika, Rs 3.



OPINIONS

Kanada himself......might express himself more or less similarly. —Dr. F. W. Thomas.

Interesting and valuable......read with much pleasure and profit.—Sir Charles Eliot.

I have never been pleased to such a degree by any English resume of Indian though......a truly noble work & well worthy of meditation.—Prof. Louis dela Vallee Poussin.

Valuable.—Prof. Garbe.

Limpid and lucid prose......a clear arrangement......Much of the best Indian thought...... contained in it.—Mrs. Rhys Davids.

One of those rare books .....not often to be found in India......Never.....has the fundamental difference between the towstand points Western and Hindu found such a precise expression .........something altogether new......specially valuable......should not be overlookedy banybody.......—Dr. Schrader.

Read......with the grestest interest......an admirable piece of clear and systematic exposition.--Dr. McTaggart.

Few could have explained Hindu ideas with such lucidity and simplicity.—Dr. A. Neve.

A most painstaking and readable presentation......Readers with the modern culture...... will see them, *i. e.*, Hindu ideas in a new light — Bhagavan Das. M. A.

Never seen any book in English which has interpreted Eastern thought so successfully.—Dr. Brajendra Nath Seal (communicated through Dr. Ram Das Khan.)

Full of interest and valuable.—*Galassgow Herald.*



We cannot praise too highly.—*Indian Review.*

Clearness of thinking and lucidity of exposition......deep erudition.—*The Leader.*

A valuable contribution.—*The Indian Mirror.*

A sample of what good work may be done by combining Eastern and Western culture...... The tyro and the expert both would find much matter for thought in this fascinating book.—*The Modern Review.*

2. *Kashmir Shaivaism, (*in English, dealing with the Advaita Shaiva Philosophy and also partly with the Sankhya.*)* Rs. 2-8.

OPINIONS:—

Very learned......very clear & fully worked out.—Dr. F. W. Thomas.

Read......with extreme a pleasure......throws such a clear and brilliant light on a most important branch of thought.—Dr. Barnett.

Most lucid and valuable.—Sir Charles Eliot.

For all who have ever struggled with the complicated historical questions and technical difficulties of the Trika [*i. e.* Advaita Shaiva Philosophy], the book will be a real relief.—Dr. Schrader.

Marked by that clarity of exposition which distinguishes all your writings...very interesting ......a great pleasure to read .....found the lucid analysis of the Shaiva Tattvas admirable.—Sir John Woodroffe.

Remarkably able work......practically unique.—Mrs. Besant.

The author has......a thorough grasp of

Kashmiri Shaiva Literature...... a happy gift of expression which enables him to convey the peculiar philosophical conceptions of Hindu thinkers in terms intelligible to the Western mind......our already deep obligations to him.—*Journal of the Royal Asiatic Society.*

A very valuable contribution to the History of Indian thought.—*Luzac's Oriental List.*

3. *Shiva-Sutra-Vimarshini* (Sanskrit Text). Cloth Rs. 3. Paper Rs. 2-8-0.

4. *Pratyabhijna-Hridaya* [Sanskrit Text]. Cloth Re. 1-6-0. Paper Re. 1.

5. *Spanda Karikas with the* Vritti of Kallata.
6. *Shiva-Sutra-Varttika*
[Sanskrit Texts bound in one volume], Rs. 2-12-0.

7. *Spanda-Karikas with* Vivriti of Rama [Sanskrit Text] Rs. 2-12-0.

8. *Paramartha Sara by* Abhinava-Gupta. (Sanskrit Text], Rs. 2-12-0.

WORKS IN THE PRESS.

1. *Ishvara-Pratyabhijna* with the Vimarshini of Abhinava-Gupta.
2. *Tantraloka of Abhinava-Gupta.*
3. *Para-Trimshika,* with the Vivarana of Abhinava Gupta.
4. *Stava-Chintamani.*
5. *The Sayings of Lalleshvari* a Kashmiri Saint and Seeress in Kashmiri and Sanskrit.

The published volumes are to be had now of.

The Research Department,
Kashmir State,
SRINAGAR [KASHMIR].

